श्रीलब्धिसूरीश्वर-जैनग्रन्थमालायाः द्वितीयो मणि ।

श्रीस्याद्वादिने नमः । श्रीआत्म-कमल-लब्धिसूरीश्वरेभ्यो नमः ।

वाचकवर्य्य-श्रीकीर्तिविजयगणिसमुचित—

# हीर-प्रश्नोत्तराणि ।

उपदेशकः—कविकुलकिरीट, व्याख्यानवाचस्पति, आगम-प्रज्ञ, शासनप्रभावकजैनाचार्यश्रीमद्विजय—लब्धिसूरीश्वरजी महाराजना पट्टप्रभावक-आचार्य श्रीविजयगंभीरसूरीश्वरजी महाराज ।

सहायकः—श्री जैन संघ—मद्रास ।

प्रकाशकः—शा. चंदुलाल जमनादास छाणी ( गुजरात )

वीर सं २४६४ मूल्य रू. ०-१२-० प्रत. ५००

मुद्रक-शाह गुलाबचंद लल्लुभाई, महोदय प्रेस—भावनगर

# प्रस्तावना

अयि भव्याः ! अस्मिञ्जगतित्रिकालाबाधितस्याद्वादसिद्धान्तानां पठनपाठनमेव श्रेयस्करमस्ति, । तथाप्यगाधद्वादशांगीसागरनिमग्नान् तान् स्वल्पसमयेन बोद्धुं सत्त्वा न शक्नुवन्ति, तेषां सौकर्येण शीघ्रं सिद्धान्ततत्त्वावगाहनेच्छूनां परोपकाराय पुरातनमहर्षिभिर्नानाविधप्रश्नोत्तररूपग्रन्था विनिर्मितास्सन्ति ॥ यथा भगवत्याद्यङ्गप्रज्ञापनाद्युपाङ्गप्रकीर्णकादिग्रन्थेषु तथैव पद्धतिर्दरीदृश्यते । अनया पाठकजनानां बोधसौलभ्यमनुमीयते,

ते खलु प्रश्नोत्तरग्रन्था मनीषिणां मतिलतायाः पुष्पस्वरूपाः सिद्धान्तावलोकनरसिकभव्यभ्रमरानाकर्षयन्ति ॥ लौकिकव्यवहारेऽपि शिक्षका बालान् प्रश्नात्मकप्रणालिकया प्रबोधयन्तीति प्रथितो मार्गः

अयं मार्गश्च विशेषतया स्मरणोत्तेजको परिवर्तते ॥ अस्य ग्रन्थस्य प्रणेतारः परमप्रभावकप्रातःस्मरणीयनामधेयाकब्बरभूपप्रतिबोधकाऽहिंसाधर्मप्रचारकसूरिपुरंदरश्रीमद्विजयहीरसूरयस्सन्ति, येषां सत्तासमयः सप्तदशशताब्दी वेविद्यते, संग्रहितारश्च तेषां शिष्या वाचकवराः पुण्यकीर्तिविजयोपाध्यायाः । यैर्विक्रमनवत्युत्तरषोडशशतसंवत्सरे निधिसहस्रदशोत्तरषट्शतपरिमितश्लोकसंख्याकविचाररत्नाकरनामा ग्रन्थोऽपि व्यरचि,

यस्मिन् छेदग्रन्थागमपाठोल्लेखपूर्वकं-लुम्पकमतनिरसनाद्यनेकविषयाणां परिस्फोटो वर्तते । एतस्य ग्रन्थसङ्ग्राहकस्य प्रव्रज्या राजनगरे सप्तदशभिर्वर्षैरसह एकत्रिंशदुत्तरषोडशशतवैक्रमीयाब्दे श्रीमद्विजयहीरसूरीश्वरवरकरकमलेनाऽजनि ॥

॥ ॐ श्रीशङ्खेश्वरपार्श्वनाथाय नमः ॥

॥ श्री आत्म–कमळ–लब्धिसूरीश्वरेभ्यो नमः ॥

पण्डितश्रीकीर्तिविजयगणिसमुचित–

# हीरप्रश्नोत्तराणि ॥

## अथ प्रथमः प्रकाशः

स्वस्तिश्रियो निदानं,[1] जन्तूनां धर्मकारिणाम्।
सम्यक् श्रीवर्धमान–तीर्थाधिराजमभिनम्य सद्भक्त्या ॥ १ ॥
गीतार्थवृन्द[2]निर्मित–पृच्छानामुत्तराणि लिख्यन्ते ।
श्रीहीरविजयसूरि–प्रसादितानि प्रबोधाय ॥ २ ॥ (युग्मम्)

१ प्रत्यंतरे अतिनम्य । २ सार्थेत्यन्यत्र ।

# प्रश्नकर्तृनाम्नांसूचि

नवत्युत्तरषोडशशतवर्षे एतद्ग्रन्थसमुच्चयमकारि तेन पाठकप्रवरेण, चतुर्दशशतश्लोकप्रमाणकस्यैतस्य ग्रन्थस्यापरनाम " प्रश्नोत्तरसमुच्चयोऽस्ति ॥

स्तम्भनपुरीयज्ञानविमलसूरिभाण्डागारसत्कप्रतित्रयानुसारेण व्याख्यानवाचस्पतिकविकुलकिरीटगुरुवर्याचार्यदेव–श्रीमद्विजयलब्धिसूरीश्वराणां प्रसादतस्साहाय्यतश्च संशोधितोऽयं ग्रन्थः ।

अस्य ग्रन्थस्य मुद्रापणकार्ये पत्रव्यवहार–प्रुफप्रेषणादिना मुनिश्री ललितांगविजयेन साहाय्यं दत्तमस्ति ।

श्रीविजयलब्धिसूरीश्वरपट्टप्रभावक–श्रीमद्विजयगम्भीरसूरीणामुपदेशेन मद्रासश्रीसङ्घेन " श्रीलब्धिसूरीश्वर जैन्थ ग्रन्थमाला " उदपादि, तत् सकाशात् प्रादुर्भूतोऽयं ग्रन्थः ।

तेषां प्रतित्रयाणां मध्ये एकोनचत्वारिंशत् पत्रात्मिकाऽतीव शुद्धा, यदन्ते " समाप्तोऽयं प्रश्नोत्तरसमुच्चयग्रन्थः शोधितश्च संवत् १६५९ वर्षे चम्पावतीनगरे मार्गशीर्षे मासे सिते पक्षे तृतीयायां मन्दवासरे तपागच्छाधिराज–श्रीहीरविजयसूरीश्वरपट्टोदयाचलसहस्रकिरणायमानसम्प्रतिविजयमानगच्छनायकपरमगुरु–श्रीविजयसेनसूरीश्वराणां निदेशात् महोपाध्याय–श्रीसोमविजयगणिपंडितकल्याणकुशलगणि पं. लब्धिसागरगणि पं. लाभविजयगणिभिः ॥ आचन्द्रार्कं चिरंनन्दतात् ॥ श्रीः । " एवमुल्लेखोऽस्ति, ।

अस्मिन् ग्रन्थे सोपयोगं कृतसंशोधनेऽपि छाद्मस्थ्यदोषतो यंत्रदोषतो वा याः काश्चन त्रुटयः स्युः' ताः समावलोक्य परिहृत्य च सज्जनैः प्रपाठ्योऽयं ग्रन्थः इत्यभ्यर्थनानन्तरं प्रातःस्मरणीय–कटोसणादिनरेशप्रतिबोधप्रसारिताहिंसाधर्मोर्मीणां, विविधवादविवादलब्धजयपताकानाम् । आचार्यदेवश्रीमद्विजयलब्धिसूरीश्वराणां चरणेन्दीवरचञ्चरीको विरमति विक्रमविजयो मुनिः ।

# प्रश्नकर्तृनाम्नांसूचि

॥ ॐ श्रीशङ्खेश्वरपार्श्वनाथाय नमः ॥

॥ श्री आत्म-कमल-लब्धिसूरीश्वरेभ्यो नमः ॥

पण्डितश्रीकीर्त्तिविजयगणिसमुच्चित-

# हीरप्रश्नोत्तराणि ॥

## अथ प्रथमः प्रकाशः

स्वस्तिश्रियो निदानं, जन्तूनां धर्मकारिणाम् ।
सम्यक् श्रीवर्धमान-तीर्थाधिराजमभिनम्य[1] सद्भक्त्या ॥ १ ॥
गीतार्थवृन्द[2]निर्मित-पृच्छानामुत्तराणि लिख्यन्ते ।
श्रीहीरविजयसूरि-प्रसादितानि प्रबोधाय ॥ २ ॥ (युग्मम्)

१ प्रत्यंतरे अविनम्य । २ सार्थेत्यन्यत्र ।

## महोपाध्याय श्रीविमलहर्षगणिकृतप्रश्नाः—

प्रश्नः—" गच्छगओ अणुओगी " इतिगाथाया षड्विंशतिभेदास्तत्र पञ्चविंशतिभेदेषु द्वित्रिचतुर्गुणसद्भावतः संयमाराधकत्वेन वन्द्यत्वम्, उतैकद्वित्रिदोषसद्भावेन तद्विराधकत्वादवन्द्यत्वमिति ? ॥ १ ॥

उत्तरम्—" गच्छगओ अणुओगी " इतिगाथोक्तपञ्चविंशतिभेदेषु द्वित्र्यादिगुणसद्भावे इतरदोषाणां च सालम्बनसेवित्वेन संयमाराधकत्वाद् वन्द्यत्वमेव, निरालम्बनसेवित्वे तु अवन्द्यत्वमेव ॥ १ ॥

प्रश्नः—" एआरिसे पञ्चकुसीलसंवुडे रूवंधर " इतिपापश्रमणीयाध्ययनोक्तलक्षणानां साधुत्वाद् वन्द्यत्वम्, उत पार्श्वस्थादिलक्षणोपेतत्वादवन्द्यत्वमिति ? ॥ २ ॥

उत्तरम्—" एआरिसे पञ्चकुसीलसंवुडे " इतिगाथाव्याख्याने पार्श्वस्थादिलक्षणोपेतानामपि निकृष्टसाधुपदवर्त्तित्वं व्याख्यातमस्ति, तदपि सालम्बनसेवित्वादेवेति तेषामपि वन्द्यत्वमेव ॥ २ ॥

प्रश्नः—पञ्चविंशतिभङ्गाश्रितानाम् " एआरिसे " इतिगाथोक्तलक्षणोपेतानां च साधूनां षष्ठ–सप्तमगुणस्थानवर्त्तित्वम्, उत मतान्तरेण मुहूर्त्ताद् बहुकालस्थायिषष्ठगुणस्थानकवर्त्तित्वमिति ? ॥ ३ ॥

उत्तरम्—पञ्चविंशतिभङ्गाश्रितानाम् " एआरिसे पञ्च " इतिगाथोक्तलक्षणानां च साधूनां षष्ठ–सप्तमगुणस्थानवर्त्तित्वम्,

---

१ आचारात् शिथिलाः साधवः पार्श्वस्थादयः पञ्च ।

मतान्तरेण तु मुहूर्त्ताद् बहुकालावस्थायिषष्ठगुणस्थानवर्तित्वं चेत्युभयमपि भवतु, अध्यवसायानां वैचित्र्यात् तथाविधव्यक्ताक्षरानुपलम्भाच्च ॥ ३ ॥

प्रश्नः—" जो चयइ उत्तरगुणे मूलगुणे वि " इत्यत्राचिरत्वं संवत्सरादिकालनियमेन, सामान्येन वेति ? ॥ ४ ॥

उत्तरम्—" जो चयइ उत्तरगुणे " इतिगाथायामचिरेणेति पदमुत्तरगुणत्यागप्रतिषेधपरम्, कालनियमस्तु कर्तुं न शक्यते कस्यचित्पतितपरिणामस्योत्तरगुणत्यागादचिरेणापि मूलगुणभ्रंशो भवति, तदितरस्य तु चिरेणापि न भवति ॥ ४ ॥

प्रश्नः—क्षपणकादीनां दशानामन्यतमः कश्चित् तपागणसाधूनां वन्दना-ऽर्चन-भक्त-पान-वसतिदानादिकं विदधाति, कश्चिच्च तद्वैपरीत्यं करोति, तयोः फले साम्यं कश्चिद् विशेषो वेति ? ॥ ५ ॥

उत्तरम्—दशानां मध्ये यः कश्चन साधूनां वन्दना-ऽर्चन-भक्त-पान-वसतिदानादिकं करोति तस्य शुभमेव फलम्, यस्तु वैपरीत्यं विदधाति तस्याशुभमेवेति ज्ञातमस्ति ॥ ५ ॥

प्रश्नः—तन्मध्यस्थः कश्चित्प्रासादादिरक्षणाय यतते, तदन्यस्तु वैपरीत्यभाक्, तयोरपि साम्यं विशेषो वेति ? ॥ ६ ॥

उत्तरम्—तेषां प्रासादादिरक्षणयत्नविधाने शुभमेव फलं तद्विपरीतविधाने त्वशुभमेव ॥ ६ ॥

प्रश्नः—तन्मध्यस्थः कश्चिद् ज्ञान-दर्शन-चारित्र-तपःप्रभृति शुभं कुर्वतां सङ्घस्थानां सान्निध्यम्; तदन्यस्तु वैपरीत्यं करोति तयोः साम्यं नवेति ? ॥ ७ ॥

---

१ क्षपक इत्यपि पाठः । २ सवन्धी साधूना इत्यपि पाठः ।

उत्तरम्—एवं ज्ञानादिशुभं समाचरतां सङ्घस्थानां सान्निध्याऽसान्निध्ययोरपि ॥ ७ ॥

प्रश्नः—वर्णादिभिर्भेदे जात्या शुनामिव दशानां परस्परं मतभेदेऽपि आज्ञाविराधकत्वेन साम्यम्, किं वा विशेष इति ? ॥८॥

उत्तरम्—दशानां वर्णादिविचित्रश्च साम्यप्रतिपादकं वचस्तु नात्मीयं किन्तु परकीयमेव ॥ ८ ॥

प्रश्नः—चैत्यादिधर्मकार्यं कुर्वतामेषां तपागणसम्बन्धी शक्तिमान् श्राद्धः सान्निध्यम्, माध्यस्थ्यम्, विकारं वा भजते तदा लाभो नवेति ? ॥ ९ ॥

उत्तरम्—चैत्यादिधर्मकार्यंकुर्वतां तेषां श्रीपरमगुरुपादैरादेयतयादिष्टचैत्यादिधर्मकार्ये सान्निध्यकरणमायाति सुन्दरम्, तदितरकार्ये तु माध्यस्थ्यमेव, न तु क्वापि वैपरीत्यकरणेन विरोधोत्पादनं श्रेयसे ॥ ९ ॥

प्रश्नः—नवानां लुम्पाकव्यतिरिक्तानां प्रतिमापूजा-स्तुती अशुचिविलेपनगालीप्रदानरूपे ?, अथवा पूजास्तुतिरूपे ? इति ॥१०

उत्तरम्—"नवानां पूजास्तुती अशुचिविलेपनगालीप्रदानरूपे" इत्यादिवचनं तु सतामुच्चारार्हमेव न भवतीति किं प्रतिवचनेन ? ॥ १० ॥

प्रश्नः—केषाञ्चित्सङ्घभक्तिं कुर्वतामभक्तिं च कुर्वतां भूतार्त्तमद्यपवत् साम्यम्, उत भक्तिजनितशुभप्रकृतिफलोदयो वा जन्मान्तरे ? ॥ ११ ॥

उत्तरम्—सङ्घभक्तिमभक्तिं च कुर्वतां भूतार्त्तमद्यपवत् साम्यमित्यादिवाक्यं पूर्ववदेव प्रत्युत्तरितं बोध्यम् ॥ ११ ॥

प्रश्नः—एतेषां नमस्कारपाठ-बन्दिमोचन-ब्रह्मपालनादिकं किञ्चित्केषाञ्चिन्मार्गानुयायि, किं वा सर्वेषांशौनिक-लुब्धक-

धीवराध्यवसायवत्पापहेतुः ? ॥ १२ ॥

उत्तरम्—" एतेषां नमस्कारपाठ–बन्दिमोचन–ब्रह्मपालनादिकं किञ्चित्केषाञ्चिन्मार्गानुयायि किंवा सर्वेषां शौनिकलुब्धकधीवराध्यवसायवत्पापहेतुः " इति वचः सतां वक्तुमेवानुचितमिति किं प्रतिवचसा ? ॥ १२ ॥

प्रश्नः—परपाक्षिकसंपादितस्तोत्रादिकं मातङ्ग–तुरुष्कादिसंपादितरसवतीवदनास्वाद्यमेव, कश्चिद्विशेषो वा ? ॥ १३ ॥

उत्तरम्—परपाक्षिकसंपादितस्तोत्रादीनां मातङ्ग–तुरुष्कादिसंपादितरसवत्युपमानं सतां वक्तुमेवानुचितमिति किं प्रतिवचनेन ? ॥ १३ ॥

प्रश्नः—तपागणसम्बन्धिश्राद्धः स्वकीय–स्वकीयेतरचैत्येषु चन्दनादिकं मुञ्चति, तत्र स्वकीयचैत्ये लाभहेतुरन्यत्र पाप हेतुः, किं वोभयत्र साम्यम् ? ॥ १४ ॥

उत्तरम्—तपापक्षीयः श्राद्धः स्वकीयेषु परकीयेषु वा चैत्येषु चन्दनादि मुञ्चति, तत्र स्वकीयेषु यथा लाभस्तथा श्रीपरमगुरुपादैरदेयत्तयादिष्टेषु परकीयेष्वपि लाभ एव ज्ञातोऽस्ति, न तु पापम् ॥ १४ ॥

प्रश्नः—द्वितीयादिपञ्चपर्वी श्राद्धविध्यादिस्वीयग्रन्थातिरिक्तग्रन्थे क्वास्ति ? ॥ १५ ॥

उत्तरम्–द्वितीयादिपञ्चपर्वी उपादेयत्वं संविग्नगीतार्थाचीर्णतया संभाव्यते, अक्षराणि तु श्राद्धविधेरन्यत्र दृष्टानि न स्मरन्ति॥१५॥

प्रश्नः—" मासम्मि पव्वछक्कं तिन्नि य पव्वाइं पक्खम्मि " इतिगाथोक्तैव चतुष्पर्वी सर्वश्राद्धानाम्, किं वा लेपश्राद्धाधिकारे वर्णितेति ? ॥ १६ ॥

उत्तरम्—" मासम्मि पव्वछक्कं तिन्नि य पव्वाइं पक्खम्मि " इतिगाथोक्तैव चतुष्पर्वी सर्वश्राद्धानां संभाव्यते, न तु लेपश्राद्धाधिकारोक्तेति ॥ १६ ॥

प्रश्नः—महाविदेहेषु कल्याणकतिथ्यादिकमिदमेव अन्यद् वा ॥ १७ ॥

उत्तरम्—महाविदेहेषु कल्याणकतिथ्यादिकमिदमेवेति न संभाव्यते, यदाऽत्रत्यतीर्थकृतां च्यवनादिकल्याणकम्, तदा तत्र दिवससद्भावात् । तत्प्रतिपादकान्यक्षराण्यपि नोपलभ्यन्ते ॥ १७ ॥

प्रश्नः—पाण्मासिकयोगोद्वाहकानां षड्दिवसाधिकैर्वा षड्दिवसहीनैर्वा षण्मासी आलोचना दीयते ?, यदि चाधिकैस्तदानीमस्वाध्यायसम्बन्धिद्वादशदिनक्षेपवच्चातुर्मासिकाऽस्वाध्यायदिनचतुष्टयमपि कथं न [1]निक्षिप्यते ? तथा च दशदिनाधिकाः षण्मासा भवन्ति इति कथमालोचनाविधिरिति प्रसाद्यमिति ॥ १८ ॥

उत्तरम्—पाण्मासिकयोगवाहिनां षड्दिवसाधिकैः षण्मासैरस्वाध्यायदिनगणनानिरपेक्षमेवालोचना दातव्येति वृद्धसंप्रदाय इति ॥ १८ ॥

प्रश्नः—चतुर्थयामे कदाचिद् घटिकाचतुष्टयावसाने कालद्वये गृहीते अथवैकस्मिन् काले गृहीते द्वितीये गृह्यमाणे उल्कापातादिकं व्योमस्थं कालप्रतिबन्धिकारणं भवति तदा कालद्वयमेको वा तिष्ठति ?, अथवा नेति ? । किञ्च, प्रथमादिषु कालेषु गृह्यमाणेषु अन्तरा दिगालोकः किमर्थं विधीयते, कालस्य शुद्धत्वादिति ? ॥ १९ ॥

---

१ क्षिप्यते इति पाठः ।

उत्तरम्—निशाविरामे कालग्रहणादनु उल्कादौ जातेऽपि कालोपघातो न भवति। द्वितीये गृह्यमाणे उल्कादौ जाते तु कारणं विना एकोऽपि न शुध्यति, तथा कालग्रहणानन्तरमपि दिगालोको न मुच्यते इति वृद्धपारम्पर्यमिति ॥१९॥

प्रश्नः—प्राभातिकस्थाने वेरतीस्थापनमाकस्मिकमन्धिकार्ये स्वभाववृत्त्या वेति ? ॥ २० ॥

उत्तरम्—प्राभातिकस्थाने वेरतीकालस्य स्थापनमाकस्मिकसन्धिकारणे एव नान्यथेति बोध्यम् ॥ २० ॥

## अथ महोपाध्याय श्रीकल्याणविजयगणिकृतप्रश्नाः—

प्रश्नः—प्रथमायां श्राद्धप्रतिमायां दर्शनिद्विजादिभिक्षुकाणामन्नादि दातुं कल्पते नवा ? ॥ १ ॥

उत्तरम्—प्रथमश्राद्धप्रतिमायां दर्शनिद्विजादिभ्योऽनुकम्पादिनाऽन्नादि दातुं कल्पते, न तु गुरुबुद्ध्येति तत्त्वम् ॥ १ ॥

प्रश्नः—कुलगुरुसम्बन्धेन समागतानां दर्शन्यादीनामपि ? ॥ २ ॥

उत्तरम्—एवं कुलगुरुतादिसम्बन्धेनागतानां लिङ्गिनां दातुं कल्पते ॥ २ ॥

प्रश्नः—नवमप्रतिमादिषु देशावकाशिकं कर्त्तुं युज्यते न वा ? ॥ ३ ॥

उत्तरम्—नवप्रतिमादिषु देशावकाशिकस्याकरणमेव प्रतिभाति ॥ ३ ॥

प्रश्नः—क्वचिल्लिखितविधौ " दशमप्रतिमायां कर्पूरवासादिभिर्जिनानां पूजा कर्त्तव्या" इति लिखितमस्ति, तद्विषये कियतीः

---

१ आक सन्धि–इति पाठान्तरम्।

प्रतिमा यावत् चन्दनपुष्पादिभिः पूजा, कियतीषु च कर्पूरवासादिभिः, कस्यां च नेति ? ॥ ४ ॥

उत्तरम्—प्रतिमाधरश्रावकाणां सप्तमप्रतिमां यावच्चन्दन–पुष्पादिभिरर्हदर्चनमौचित्यमञ्चति ललितविस्तरापञ्जिकाभिप्रायेण, नत्वष्टम्यादिषु, कर्पूरादिपूजा तु अष्टम्यादिष्वपि नानुचितेति ज्ञायते तेषां निरवद्यत्वादिति । अक्षराणि तु ग्रन्थस्थानि नोपलभ्यन्त इति । एकादश्यां च साधुवदेवेति बोध्यम् ॥ ४ ॥

प्रश्नः—“ आणाखंडणकारी ” इतिगाथायामुत्सूत्रप्रवर्तिनां पूजादिविधेर्नैरर्थक्यमुक्तमस्ति तत् किं फलमात्रापेक्षया, तद्विशेषापेक्षया वा ? ॥ ५ ॥

उत्तरम्—“ आणाखंडणकारी ” इतिगाथायामुत्सूत्रप्रवर्त्तिनां यत्पूजाविधेर्नैरर्थक्यमुक्तं तन्मोक्षलक्षणफलविशेषापेक्षया, न तु फलमात्रापेक्षया ॥ ५ ॥

प्रश्नः—जम्बूद्वीपप्रज्ञप्तौ, जीवाभिगमे च जगतीवर्णनाधिकारे “ पुरा पुराणाणं सुचिण्णाणं सुपरिक्कंताणं सुभाणं कल्लाणाणं कडाणं कम्माणं फलविसेसं पच्चणुभवमाणा विहरंति” अत्र ‘वाणमंतरा देवा य देवीओचि’ विशेष्यं संबध्यते तथा चात्र यत्पुरातनं कृत्यं श्लाघितं वर्तते तत्किमाराधकसम्यग्दृष्ट्यादिसत्कम्, उतान्यसत्कमिति ? ॥ ६ ॥

उत्तरम्—जम्बूद्वीपप्रज्ञप्तौ, जीवाभिगमे च जगतीवर्णनाधिकारे व्यन्तरदेवदेवीनां यत् ‘ पुराणाणं सुचिण्णाणं ’ इत्यादिना प्राक्तनसुकृतप्रशंसनं तदाराधकसम्यग्दृष्ट्यादिव्यतिरिक्तानामेवावसीयते ॥ ६ ॥

---

## पण्डितश्रीजगमालगणिकृतप्रश्नाः—

प्रश्नः—सन्ध्याप्रतिलेखना-देशमार्गणसमये मुनयो मिलन्ति, सा सप्तानां मध्ये का मण्डलीति ? ॥ १ ॥

उत्तरम्—सन्ध्यायां प्रतिलेखना-देशमार्गणनिमित्तं यन्मुनयो मिलन्ति तदावश्यकमण्डलीमध्येऽन्तर्भवतीति संभाव्यते ॥१॥

प्रश्नः—सद्दालपुत्रकुम्भकारकृतं प्रतिक्रमणसूत्रमिति प्रघोषः सत्यो न वा ?, कस्य कृतिर्वा सा ? ॥ २ ॥

उत्तरम्—श्राद्धप्रतिक्रमणसूत्रमार्षमिति पञ्चाशकवृत्तौ प्रोक्तमस्ति, कुम्भकारकृतमिति प्रघोषस्तु तथ्येतर इति ज्ञायते ॥२॥

प्रश्नः—षष्ठकर्म्मग्रन्थकर्त्री चन्दनमहत्तरा साध्वीति सत्यं न वेति ? ॥ ३ ॥

उत्तरम्—षष्ठकर्म्मग्रन्थकर्त्री चन्दनमहत्तरा साध्वीति प्रघोषो मिथ्येति प्रतिभासते, यतस्तट्टीकायाम् ' आचार्य आह ' इत्युक्तमस्ति, तथैव तदवचूर्णौ चन्दनमहत्तरकृतं प्रकरणं व्याख्यायत इति ॥ ३ ॥

प्रश्नः—चतुःशरणप्रभृतीनां कियतां प्रकीर्णकानां पठने श्राद्धोऽधिकारीति ॥ ४ ॥

उत्तरम्—परम्परया भक्तपरिज्ञा-चतुःशरण-आतुरप्रत्याख्यान-संस्तारकप्रकीर्णकानामध्ययने श्राद्धानामधिकारित्वमवसीयते ॥ ४ ॥

प्रश्नः—श्वेतदशमीदिनाचाम्लविधायकानां काचिन्मिथ्यामतिर्न वा ? ॥ ५ ॥

उत्तरम्—दशमीदिनाचाम्लविधायिनां मिथ्यामतिर्ज्ञाता नास्ति ॥ ५ ॥

प्रश्नः—रोहिणीदिनाराधकानां तथैव ? ॥ ६ ॥

उत्तरम्—रोहिणीदिनाराधकानां तथैव ॥ ६ ॥

प्रश्नः—पर्युषणोपवासः पञ्चमीमध्ये गण्यते न वा ? ॥ ७ ॥

उत्तरम्—पर्युषणोपवासः षट्करणसामर्थ्याभावे पञ्चमीमध्ये गण्यते, नान्यथेति ॥ ७ ॥

प्रश्नः—काकुत्स्थ इति रामनाम, तद्वंशनाम वा ? कथं च व्युत्पत्तिः ?, ॥ ८ ॥

उत्तरम्—कु इत्यत्र "अव्ययस्य को द् च" सिद्धहे० । ७ । ३ । ३१ ॥ इति अकि ककुद्, कुत्सितं तिष्ठन्ति विपक्षा अस्मिन्निति " स्थादिभ्यः कः " सिद्धहे० ॥५॥३॥८२॥ इति 'के' ककुत्स्थस्तस्यापत्यं काकुत्स्थो राम इति व्युत्पत्त्यनुसारेण रामवंशस्यादिपुरुषस्याभिधानं काकुत्स्थ इति ॥ ८ ॥

प्रश्नः—अर्धमण्डलीति कोऽर्थः ? ॥ ९ ॥

उत्तरम्—प्रभाते व्याख्यानम्, रात्रौ अर्थपौरुषी चेति अर्धमण्डलीति ॥ ९ ॥

प्रश्नः—"आवस्सिआए जस्स जोगो सिज्झातर " इत्यत्र योगशब्देन किमुच्यते ? ॥ १० ॥

उत्तरम्—यस्य योगो भिक्षार्थं गच्छन्निदं वक्ति ' यस्य योगो येन वस्तुना सह सम्बन्धो भविष्यति तद् ग्रहीष्यामि ' इत्यर्थः, इति ओघनिर्युक्तिवृत्तौ ॥ १० ॥

प्रश्नः—अष्टापदगिरौ स्वकीयलब्ध्या ये जिनप्रतिमां वन्दन्ते ते तद्भवसिद्धिगामिन इत्यक्षराणि सन्ति, तथा च सति ये विद्याधरयमिनस्तथा राक्षस-वानर-चारणभेदभिन्ना अनेके ये तपस्विनस्तत्र गन्तुं शक्तास्तेषां सर्वेषामपि तद्भवसिद्धिगामित्वमापद्यते, ततः सा का लब्धिर्यया तत्र गमने गौतमादिवत् तद्भवसिद्धिगामिनो भवन्तीति ? ॥११॥

उत्तरम्—अष्टापदगिरौ ये तपःसंयमोत्थलब्ध्या यात्रां कुर्वन्ति ते तद्भवसिद्धिगामिन इति संभाव्यते, व्यक्ताक्षरानुपलम्भात्॥११॥

प्रश्नः—दिगाचार्या इति कोऽर्थः ॥ १२ ॥

उत्तरम्—दिगाचार्या ये गुर्वादिष्टदिग्वर्त्तिसाधूनां सारणादिकर्तार इति सचित्ताचित्तमिश्रवस्त्वनुज्ञापी दिगाचार्य इति. योगशास्त्रे चतुर्थप्रकाशे " प्रायश्चित्तं वैयावृत्त्यम्, " इत्यादिश्लोकवृत्तौ ॥ १२ ॥

प्रश्नः—आर्यसुहस्ति-आर्यमहागिरिनामानौ श्रीधर्मसागरोपाध्यायकृतपट्टावल्यादौ सहोदरावुक्तौ, कल्पवृत्तस्थविरावल्यां च भिन्नगोत्रौ तत्र को हेतुः ? ॥ १३ ॥

उत्तरम्—आर्यसुहस्ति-आर्यमहागिर्योः सहोदरत्वेऽपि भिन्नगोत्रत्वं न विरुध्यते, मण्डिकपुत्र-मौर्यपुत्राभिधगणधरयोरपि तथैव श्रवणात्॥ १३ ॥

---

१ द्वितीयान्तम् ।

## पण्डितश्रीकल्याणकुशलगणिकृतप्रश्नाः—

प्रश्नः—" इमं च णं केवलकप्पं जम्बुदीवं दीवं विउलेणं ओहिणा आभोएमाणे पासत्ति " इत्यत्र चतुष्पल्यायुषः सूर्याभस्य कथं जम्बूद्वीपावधिकमवधिज्ञानं संभवति " उणद्धसागरे संखजोअणा तप्परमसंखा " इति वचनात् ॥१॥

उत्तरम्—कथं चतुष्पल्यायुषः सूर्याभदेवस्य जम्बूद्वीपावधिकमवधिज्ञानं संगच्छते ?, " उणद्धसागरे संखजोयणा तप्परमसंखा " इतिवचनात् इति चेदुच्यते—" उणद्धसागर " इतिगाथावृत्तौ भवनपति—व्यन्तर—ज्योतिष्कदेवानामेवावधिक्षेत्रं व्याख्यातमस्ति, वैमानिकदेवानां तु क्षेत्रस्य " दोकप्पपढमं " इत्यादिनाऽभिहितमिति न काचिद्विप्रतिपत्तिः ॥ १ ॥

प्रश्नः—पूर्णिमास्तिस्र एव पर्वत्वेन संगीर्यन्ते, सर्वा अपि वा पर्वतयाङ्गीकार्या ?, इति श्राद्धा भूयो भूयः पृच्छन्ति ॥ २ ॥

उत्तरम्—तिस्र एव पूर्णिमा पर्वत्वेन संगीर्यन्ते, सर्वा अपि चेत्यत्र " छन्नंतिहीणमज्झमि का तिही अज्जवासरे " इत्याद्यागमानुसारेणाविच्छिन्नवृद्धपरंपरया च सर्वा अपि पूर्णिमाः पर्वत्वेन मान्या एवेति ॥ २ ॥

प्रश्नः—आणाखंडणकारी सव्वं पि निरत्थयं तस्स । आणारहिओ धम्मो पलालपूलुव्व पडिहाइ ॥१॥ कलं नग्घइ सोलसिमित्यादिवचनालम्बनेन साङ्ख्यादिदर्शनान्तरेषु यद् बालतपःकष्टानुष्ठानं समाचरन्ति तत्सर्वं सर्वथा निष्फलमेव, न कापि कर्म्मनिर्जरेति केषाञ्चित्सम्मतम्, केषाञ्चित्तु तेषामपि तारतम्येन स्वल्पमपि फलं स्वीकार्यं न तु निष्फलता । अत्रागमः—" जं अन्नाणी कम्मं, खवेइ बहुयाहिं वासकोडीहिं । तं नाणी तिहिं गुत्तो खवेइ ऊसासमित्तेण ॥१॥

कलं नग्घइ सोलसिं पललपूलुव ”इत्यादावपीदमेव तात्पर्यम् । “ अविरयमाइसुराउं वालतवोऽकामनिज्जरो जयइ
सरागसंजमेणं वालतवेणंतिचरगपरिव्वायवंभलोगो जा ” इत्यपि । अत एव वालतपस्विनामपि कोडिन्नदिन्न-
सेवालिनाम्नां स्वीयस्वीयतपोऽनुसारेणैव सोपानप्राप्तिः । सर्वथा विफलतायां तु सर्वेपामप्राप्तिः प्रसज्यते । कथं
च कर्म्मलाघवमन्तरेण मिथ्यात्विन एव ग्रन्थिदेशं यावदागच्छन्ति ? । न चाकामनिर्जरामात्रमेव तत्र हेतुः,
कारणान्तराणामपि विवाहप्रज्ञप्तिवृत्तावुक्तत्वात् । तथाहि–अणुकंपकामनिज्जर, वालतवेदाणविणयविब्भंगे । संजो-
गविप्पओगे, वसणुसवइड्ढिसक्कारे ॥१॥ दृश्यते चैतदर्थसंवादः साक्षादेव महानिशीथे नागिलाधिकारे । तद्यथा–
‘ अकामनिज्जराए वि किंचि कम्मक्खयं भवइ, किं पुण जं वालतवेणं,’ एवं मति ‘निरत्थयं तस्स’ इत्यादीनां का
गतिरिति चेत् ? सत्यम्–सर्वाणि चैतानि उत्सर्गसूत्राणि, ततोऽत्र उत्सर्गादपवादो वलीयान्, अयमेव न्यायोऽनु-
सर्त्तव्यस्ततः सिद्धं तेपामपि तारतम्येन किञ्चित् किञ्चित् फलमिति समादधते तथा केचिद् महानिशीथगतंप्र-
सिद्धालापकमुपष्टभ्य वक्तारो भवन्ति । तथाहि–ये पक्षान्तरीयविहितमेतज्जिनप्रासादादिपरित्राणमाचार्योपाध्या-
यादीनामापन्निवारणं साधुमुद्दिश्य दानसत्कारादिकं चानुमन्यन्ते तेपां महत्पातकं जायते, सम्यक्त्वमपि प्रति-
हन्यते, तेन मतान्तरीयकृतं युगप्रधानाचार्यभक्त्यादिकमपि सर्वथा नानुमोदनीयमेवेति । केचित्तु तानपि प्रतिव-
दन्ति–यथा नयसार–धनश्रेष्ठि–सङ्गमादीनां मिथ्यात्वभाजामपि दानं वहुपु ग्रन्थेपु परम्परया चानुमोद्यमानं

१ “ जेयावि निण्हगाणं अणुकूलं भासिज्जा ” इत्यादि ।

दृश्यते, तथा सर्वतीर्थकृत्-साध्व्यतिशय-साधुपारणासु पञ्चदिव्यावसरे ' अहो ! दानमहो ! दानम् ' इत्युद्घोषोऽपि । यदनुमोदनीयं न, तत् कार्यते कथं ? दृश्यन्ते च भवदादयः सर्वेऽपि मार्गप्रतिपन्नाः कारयन्तो यथा-" देहि भोः ! किञ्चिदस्मभ्यं तव भूयान् लाभो भावी " इति । यदि च अदत्ते तदा संतुष्टिरपि जायते, इति स्वयमनुभूयमानस्यार्थस्य विलोपः कर्तुं सतां नोचित इत्याशयवतैव सूत्रकारेणाभ्यधायि-अहवा सव्वं चिय वीअरायेत्यादि । अत्र सम्यग्दृष्टिपर्यन्तानां पूर्वमुक्तत्वान्मिथ्यात्विनामपि किञ्चित्करणीयमनुमोदनीयमित्यापतितम्, तच्च विचार्यमाणं जिनजिनबिम्बजिनालयाचार्योपाध्यायसाधुश्राद्धादीनां वास्तव्याराध्यानामशनपानप्रदानादिभक्तिवर्णसंज्वलनापत्परित्राणादिकं, दृश्यते चानुमोदितं साक्षादप्याचाराङ्गादौ साधुना, " माग्निंशकटी पुरस्करणे मम नकल्पते, भवता पुनः पुण्यप्राग्भारार्जनमकारि " इत्यादि । कथं च जिनशासनप्रभावनाकारिणो म्लेच्छा अप्यनुमोद्यन्ते इत्याद्यनाग्रहबुद्ध्या पर्यालोचनीयमिति ॥ ३ ॥ ४ ॥

उत्तरम्—तृतीयचतुर्थप्रश्नप्रतिवचनं तु द्वादशजल्पपट्टकादवसेयम् । किञ्च, " सव्वंपि निरत्थयं तस्स " इत्यादिवचनस्यापेक्षिकत्वान्नैकान्तवादः । अपेक्षा च मोक्षफलाभावलक्षणेतिभावः । अन्यच्च, महानिशीथप्रसिद्धालापकमुपष्टभ्य एकान्तेन परपाक्षिकप्रशंसानिषेधः सोऽपि न सङ्गच्छते, यतस्तस्मिन्नेवालापके ' अविसुद्धसुद्धपरिणामज्झगयमलादेसा ' इतिवचनेनाभिमुखमुग्धपर्षद्विशेषमध्ये एव तच्छ्लाघाया निषेधः प्रतिपादितोऽस्ति, न तु सामान्यपर्षदीति।

१ प्रत्यन्तरे ज्ञायते इतिपाठः

किञ्चात्रार्थे ऊहप्रत्यूहादिबहुवक्तव्यमस्ति तत्तु साक्षान्मिलने एव समीचीनतामञ्चतीति ॥ ३ ॥ ४ ॥

प्रश्नः—दाघज्वरी कश्चिदनशनं कृत्वा रजन्यामपि जलपानं विधत्ते ? यद्वा तद्दिवाऽनशनमेव न करोति ? किं वाऽनशनी श्राद्धो दिवापि सचित्तमचित्तं वा जलं पिबतीति ? ॥ ५ ॥

उत्तरम्—'दाघज्वरी कश्चिदनशनं कृत्वा रजन्यामपि जलपानं विधत्ते यद्वा तद्दिवाऽनशनमेव न करोति ?' इत्यत्र—रात्रौ सर्वथा जलत्यागाशक्तेन तेनाहारत्यागरूपमनशनं तु विधेयमेवेति ज्ञातमस्ति । तथाऽनशनिना श्राद्धेनाऽचित्तमेव जलं पेयं तदप्युष्णमेवेति ॥ ५ ॥

प्रश्नः—कस्यचिन्म्रियमाणस्य पक्षान्तरीयस्य कश्चित्साधुः श्राद्धो वा नमस्कारादिकं श्रावयति तस्य कियान् लाभो भवति ? पातकं वा भवति ? सम्यक्त्वं वा प्रतिहन्यते ? ॥ ६ ॥

उत्तरम्—'कस्यचिन्म्रियमाणस्य पक्षान्तरीयस्य कश्चित्साधुः श्राद्धो वा नमस्कारादिकं श्रावयति कियान् लाभो भवति ? तस्य पातकं वा भवति ? सम्यक्त्वं वा प्रतिहन्यते' ? इत्यत्रोपकारबुद्ध्या श्रावयतो लाभ एव ज्ञातोऽस्ति ॥६॥

प्रश्नः—हरिभद्रसूरिणा सौगता हुता एव ? होतुमारभ्य मुक्ता वा ? कुत्र चायं संबन्धो वर्तते ? ॥ ७ ॥

उत्तरम्—'श्रीहरिभद्रसूरिणा सौगता हुता एव होतुमारभ्य मुक्ता वा कुत्र चायं संबन्धो वर्तते' ? इत्याश्रित्य श्रीहरिभद्रसूरिभिः सौगता होतुं से[1] आकृष्टास्तदनु गुरुभिर्ज्ञातं, साधू प्रहितौ । ताभ्यां गुणसेणिअग्गिसम्मा सीहाणं दायेत्यादि

---

१ सेण ।

समरादित्यचरित्रकथनमूलगाथात्रयं दत्तम् । ततः प्रबुद्धेन सूरिणा ते मुक्ता इति तत्प्रबन्धे । प्रभावकचरित्रे तु पणपूर्वकं वादे जितः सौगतगुरुः स्वयमेव तप्तकटाहतैले प्राविशदिति । तथा तत्रैव इह किल कथयन्ति केचिदित्थम्–गुरुतरमन्त्रजापप्रभावतोऽत्र सुगतमतबुद्धान् विकृष्य तप्ते न तु हरिभद्रगुरुर्जुहाव तैले इत्यपि लिखितमस्तीति ॥७॥

॥ इति सकलसूरिपुरन्दरपरमगुरुश्रीतपागच्छाधिराजभट्टारकश्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुच्चिते प्रथमः प्रकाशः ॥

# अथ द्वितीयः प्रकाशः

## पण्डितनगर्षिगणिकृतप्रश्नाः—

प्रश्नः—जिनालये गृहस्थानां केसरादिछण्टनमुचितं न वा ? ॥ १ ॥

उत्तरम्—जिनालये श्राद्धानां केसरादिछण्टनमुचितमेव ज्ञायते तिलकादिवत् ॥ १ ॥

प्रश्नः—पर्युषितौदनो द्वितीयदिनसन्ध्यायां तक्रादिना संस्कृतः तृतीयदिने कल्पते नवा ? ॥ २ ॥

उत्तरम्—पर्युषितौदनः तक्रादिसंस्कारे सति तृतीयदिनेऽपि कल्पते ॥ २ ॥

१ तद्दिनकृत इति प्रत्यन्तरे ।

प्रश्नः—जिनप्रासादान्निर्गच्छतां साधूनां श्राद्धानां च ' आवस्सही ' करणमुचितं वा ? ॥ ३ ॥

उत्तरम्—जिनालयान्निर्गमने साधूनां सदैव, श्राद्धानां तु सामायिकपौषधसद्भावे 'आवस्सही' करणमुचितमिति बोध्यम् ॥ ३

प्रश्नः—चतुर्मासकान्तः प्रासादे देववंदनं काजकोद्धरणं विना यौक्तिकमयौक्तिकं वा ? ॥ ४ ॥

उत्तरम्—चतुर्मासिकमध्ये जिनालये देववन्दनं साधूनां श्राद्धानां च काजकोद्धरणपूर्वकमेव युक्तिमत् ॥ ४ ॥

प्रश्नः—जिनगृहे निशायां नाटयादिकं विधेयं न वा ? ॥ ५ ॥

उत्तरम्—जिनगृहे रात्रौ नाटयादिविधेर्निषेधो ज्ञायते । यत उक्तम्—रात्रौ न नन्दिर्न बलिप्रतिष्ठे, न मज्जनं न भ्रमणं रथस्य । न स्त्रीप्रवेशो न च लास्यलीला, साधुप्रवेशो न तदत्र चैत्यम् ॥ १ ॥ किञ्च, क्वापि तीर्थादौ तत्(यत्)क्रियमाणं दृश्यते तत्तु कारणिकमिति बोध्यम् ॥ ५ ॥

प्रश्नः—क्षणावसरे ' यइसणइं ठाउं ' इति कुर्वतां गमनं कल्पते न वा ? ॥ ६ ॥

उत्तरम्—क्षणावसरे ' यइसणइं ठाउं ' इति मुख्यवृत्त्या तैरेव वक्तव्यम् ये व्याख्यानं यावत् स्थातुकामा नान्यैरिति ॥ ६ ॥

प्रश्नः—सामान्यदिगम्बरगृहस्थानां गृहे रत्नत्रयादिमहोत्सवावसरे आत्मीयश्रेष्ठिप्रभृतिश्राद्धानामदनाद्यर्थं गमनमुचितमनुचितं वा ? ॥ ७ ॥

उत्तरम्—सामान्यदिगम्बरगृहस्थानां गृहे रत्नत्रयादिमहोत्सवावसरे आत्मीयश्रेष्ठिप्रभृतिश्राद्धानामदनाद्यर्थं गमनमाश्रित्य यथा विरोधवृद्धिर्न भवति तथा विधेयमिति तत्त्वं नत्वेकान्तवादः ॥ ७ ॥

प्रश्नः—पक्वाम्लिका शुष्का आर्द्रा वा समायाति ? ॥ ८ ॥

उत्तरम्—पक्वाम्लिका शुष्का ज्ञेया नत्वार्द्रा ॥ ८ ॥

## पण्डितरविसागरगणिकृतप्रश्नाः—

प्रश्नः—प्रथमान्तिमयोस्तीर्थकृतोः शरीरमाने भिन्नत्वं, बले भिन्नत्वं नास्ति तत्कथम् ? ॥ १ ॥

उत्तरम्—प्रथमान्तिमजिनयोः शरीरमानभेदेऽपि न बले भेदः, " अपरिमियबला जिणवरिंदा " इत्यागमप्रामाण्यादविशेषेण अनन्तबलवत्त्वमवसीयते ॥ १ ॥

प्रश्नः—साधुना विधिना क्रियमाणेऽपि कृत्ये प्रायश्चित्तोत्पत्तिः प्रतिपादितास्ति तत् सत्यमसत्यं वा ? ॥ २ ॥

उत्तरम्—साधुना विधिना विधीयमानेऽपि कृत्ये प्रायश्चित्तप्रदानं सत्यमेवागमे तथाऽभिधानाद्, विधिना हस्तशतात्परतो गमने ईर्यापथिकीप्रतिक्रमणवत् ॥ २ ॥

प्रश्नः—अस्वाध्यायदिनत्रयान्तः कृत उपवास आलोचनातपस्येति न वा ? ॥ ३ ॥

उत्तरम्—अस्वाध्यायदिनत्रयगतं तप आलोचनातपसि नायाऽऽति ( ऋतुमतीं स्त्रियमधिकृत्यैतत् ) ॥ ३ ॥

प्रश्नः—दिनादिपौरुष्यनन्तरं दशवैकालिकादिसूत्रगणनं शुध्यति न वेति ? ॥ ४ ॥

उत्तरम्—अहोरात्रमध्ये सन्ध्याचतुष्टयं विहाय सर्वत्र दशवैकालिकादिगणनं शुध्यतीति बोध्यम् ॥ ४ ॥

प्रश्नः—भगवतीपञ्चमशतके चत्वारि प्रमाणानि उक्तानि, रत्नाकरावतारिकायां तु द्वे कथम् ? ॥ ५ ॥

उत्तरम्—‘ भगवतीपञ्चमशतके चत्वारि प्रमाणान्युक्तानि रत्नाकरावतारिकायां प्रमाणद्वयमिति तत्कथम् ’ ? इत्यत्र परोक्षप्रमाणेऽनुमानोपमानागमलक्षणप्रमाणत्रयस्यान्तर्भावित्वेन प्रमाणद्वयमुक्तमस्तीति बोध्यम् ॥ ५ ॥

प्रश्नः—भगवतीनवमशतकोक्तोऽश्रुत्वाकेवली धर्म्मोपदेशं दत्ते न वा ? ॥ ६ ॥

उत्तरम्—‘ भगवतीनवमशतकोक्तोऽश्रुत्वाकेवली धर्म्मोपदेशं दत्ते न वा ’ इत्यत्र एकं ज्ञातम् एकं प्रश्नं च मुक्त्वा धर्म्मोपदेशं न दत्ते इति तत्रैवोक्तमस्तीति ॥ ६ ॥

## पण्डितविवेकहर्षगणिकृतप्रश्नाः—

प्रश्नः—स्थानाङ्गे चतुर्थस्थाने अन्तक्रियाधिकारे " दीहेण परिआएणं " इत्येवोभयत्र पाठः सूत्रे, वृत्तौ च सनत्कुमारान्तक्रियायां दीर्घतरेणेति व्याख्यातं तथैव च सङ्गतिरन्यथा सनत्कुमारचक्रिणस्तद्भवमुक्ततापद्येत; तेन सूत्रे तरः शब्दः किमिति नोक्तः ? ॥ १ ॥

उत्तरम्—स्थानाङ्गे चतुर्थस्थानेऽन्तक्रियाधिकारे ‘ दीहेणं परिआएणं ’ इत्येवोभयत्रापि पाठस्तथापि सनत्कुमारान्ताधिकारे दीर्घतरेणेति व्याख्यातं, भरतान्तक्रियाधिकारे तु न तथेत्येतद् व्याख्यातो विशेषार्थप्रतिपत्तिरिति न्यायादेवेति बोध्यम् । तत्र तरशब्दाऽग्रहणं तु सोपस्काराणि सूत्राणीति न्यायज्ञापनार्थमिति दिक् ॥ १ ॥

प्रश्नः—कल्पकिरणावल्यां प्रथमं प्रथमचतुर्मास्यामेव तापसाश्रमतो निर्गमाधिकारे ‘ नाऽप्रीतिमद्गृहे वास ’ इत्यादिना पञ्चाभिग्रहग्राहित्वेन मौनग्राही भगवानुक्तः । पश्चादुत्पलस्य स्वमुखेन मालास्वप्नार्थमुक्तवान्, तथा तिलकणनिष्पत्त्यादि-

स्थलेष्वनेकशो गोशालकेनापि समं जल्पितवान् तत्किमिति ? ॥ २ ॥

उत्तरम्—कल्पकिरणावल्यां प्रथमचतुर्मासके पञ्चाभिग्रहधारित्वेन मौनग्राही भगवानुक्तस्तथापि दशस्वप्नाधिकारे उत्पलस्य पुरतो मालास्वप्नार्थमुक्तवान्, तथा तिलकणनिष्पत्त्यादिस्थलेषु बहुशो गोशालकेन समं जल्पितवान् तत्कथं युक्तिमत् ? यतस्तेन भगवता तथैव द्रव्यक्षेत्राद्यभिप्रायेण मौनाभिग्रहः कृतो भावी यथा लेशतोऽपि भङ्गप्रसङ्गो न स्यादिति ॥ २ ॥

प्रश्नः—आषाढसितचतुर्दशी ग्रीष्मचतुर्मासकावसर इति हि सिद्धान्तः, तथैवाग्रे पर्युषणाया दिनानां पञ्चाशतव्यवस्थितेः । तथापि कल्पकिरणावल्याम् आषाढसितचतुर्दश्या आरभ्य भाद्रपदसितचतुर्थी यावदित्युक्तमस्ति तत्कथं घटते ? दिनानामेकपञ्चाशत्त्वप्राप्तेः ॥ ३ ॥

उत्तरम्—कल्पकिरणावल्यामाषाढसितचतुर्दश्या आरभ्य भाद्रपदसितचतुर्थी यावदित्यत्र आषाढसितचतुर्दश्या अवधित्वेनोपादानात् सा मध्ये न गण्यतेऽतः पूर्णिमातो दिनगणना, तेषां पञ्चाशदेवेति बोध्यम् ॥ ३ ॥

प्रश्नः—श्रीमहावीरमातापित्रोर्द्वादशस्वर्गोक्तिः श्रीआचाराङ्गे प्रकटा, चतुर्थस्वर्गोक्तिस्तु सूत्रे क्वापि न लभ्यते तथापि प्रकरणादिष्वनेकेषु ग्रन्थेषु प्राधान्येन तुर्यस्वर्गोक्तिः, गौणत्वेनाचाराङ्गसम्मतिस्तत्र को हेतुरिति ? ॥ ४ ॥

उत्तरम्—वीरस्य मातापित्रोर्द्वादशस्वर्गोक्तिराचाराङ्गे एव, चतुर्थस्वर्गोक्तिस्तु प्रवचनसारोद्धारादिषु ग्रन्थेषु, अत्रार्थे तत्त्वं सर्वविद्वेद्यमिति पुरातनग्रन्थकारैरुक्तमस्ति, चतुर्थस्वर्गस्य प्राधान्योक्तिस्तु बहुषु ग्रन्थेषु तच्छ्रवणादिति तत्त्वम् ॥४॥

प्रश्नः—औपपातिकोपाङ्गे अम्बडालापके 'अन्नउत्थिअ पडिग्गहिआणि चेइआणि वा' इत्येव सूत्रपाठोऽस्ति, "चैत्यानि अर्हत्प्रतिमा" इति वृत्तिनीत्यापि सूत्रे अरिहंतेति पदं न दृश्यते तेन यथा अत्र पाठः स्यात्तथा प्रसाद्य इति ॥५॥

उत्तरम्—औपपातिकोपाङ्गेऽम्बडश्रावकाधिकारे 'अन्नउत्थिअ परिग्गहिआणि चेइआणि वा' इत्यालापके अरिहंतेति पदं क्वचिदेवादर्शे दृश्यते, न सर्वत्रेति वृत्तिकृता चैत्यानि अर्हत्प्रतिमा इत्येव व्याख्यातमिति संभाव्यते ॥ ५ ॥

## पण्डितश्रीदेवविजयगणिकृतप्रश्नाः—

प्रश्नः—'इक्कारस अंगाइं बार उवंगाइं दस पइन्नाइं' इत्येतद्गाथोक्तानि प्रकीर्णकानि कानि ? ॥ १ ॥

उत्तरम्—'इक्कारस अंगाइं' इत्यादिगाथा ग्रन्थस्था ज्ञाता नास्ति, तेन दशानां प्रकीर्णकानां पृथग् नामानि ग्रन्थे न सन्ति ।१।

प्रश्नः—चत्वारि मूलसूत्राणि कानि ? ॥ २ ॥

उत्तरम्—आवश्यकम्, दशवैकालिकम्, उत्तराध्ययनम्, ओघनिर्युक्तिश्चेति मूलसूत्राणि ॥ २ ॥

प्रश्नः—षट् छेदग्रन्थाः के ? ॥ ३ ॥

उत्तरम्—निशीथम्, महानिशीथम्, दशाश्रुतस्कन्धः, बृहत्कल्पः, व्यवहारः, पञ्चकल्पश्चेति षट् छेदग्रन्थाः ॥ ३ ॥

## पण्डितजनानंदगणिकृतप्रश्नाः

प्रश्नः—श्राद्धानामष्टमान्तप्रत्याख्यानेऽवश्रावणं कल्पते न वा ? ॥ १ ॥

उत्तरम्—श्राद्धानामष्टमान्ततपसि अवश्रावणं न कल्पते, आचारणाया अभावादिति ॥ १ ॥

प्रश्नः—तथा तद्दिनकृतगुडपर्पटिका कस्यां विकृतौ समायातीति ? ॥ २ ॥

उत्तरम्—तद्दिनकृतगुडपर्पटिका घृतगुडरूपविकृतितया व्यवह्रियते इति वृद्धवादः ॥ २ ॥

## पण्डितजसविजयगणिकृतप्रश्नाः—

प्रश्नः—गृहस्थाचारधरो यतिवेषवान् प्रतिक्रमणकर्तुकामः किं सामायिकग्रहणपूर्वकमथवा चैत्यवन्दनतः ? ॥ १ ॥

उत्तरम्—गृहस्थाचारधरो यतिवेषवान् मुख्यवृत्त्या सामायिकग्रहणं कृत्वा प्रतिक्रमणं करोति ॥ १ ॥

प्रश्नः—शीतोष्णकालयोर्गृहस्थानां जिनालये देववन्दनं काजकोद्धरणपूर्वकं किं वा प्रमार्जनेन ? ॥ २ ॥

उत्तरम्—शीतोष्णकालयोर्गृहस्थानां जिनालये देववन्दननिमित्तं काजकोद्धरणाय नियमो नास्ति, तेन यदि कश्चित् करोति तदा करोतु ॥ २ ॥

## पण्डितनगर्षिगणिकृतप्रश्नाः—

प्रश्नः—'सत्तट्ठगुरुपरंपराकुसीले इगदुतिगुरुपरंपराकुसीले य' इतिश्रीमहानिशीथतृतीयाध्ययनप्रारम्भप्रस्तावेऽस्य कोऽर्थः ? १

उत्तरम्—" सत्तट्ठगुरुपरंपराकुसीले " इत्यत्र विकल्पद्वयप्रतिपादनादेवमवसीयते यत् एकद्वित्रिगुरुपरम्परा यावत् कुशीलत्वेऽपि तत्र साधुसामाचारी सर्वथोच्छिन्ना न भवति तेन यदि कश्चित्क्रियोद्धारं करोति तदाऽन्यसाम्भोगिका-

दिम्यश्चारित्रोपसम्पद्ग्रहणं विनापि भवति, चतुरादिगुरुपरम्पराकुशीलत्वे तु साम्भोगिकादिभ्यश्चारित्रोपसम्पदं

गृहीत्वैव क्रियोद्धारं करोति नान्यथेति ॥ १ ॥

प्रश्नः—महाविदेहविजयेषु विहरत्सु केवलिजिनेष्वन्यजिनानां जन्मादि स्यात् किंवा तन्मोक्षगमनान्तरमिति ॥ २ ॥

उत्तरम्—महाविदेहविजयेषु विहरत्सु केवलिजिनेषु वा अन्येषां जिनानां जन्मादि न स्यादिति ॥ २ ॥

प्रश्नः—चतुर्मासकमध्ये नगरग्रामादिमध्यावस्थाने क्षणावसरे योजनमितक्षेत्रे पुष्पप्रकारो देवैः क्रियते नवा ? अष्टप्राति-

हार्याणां नैयत्येनोक्तत्वात् क्रियते तदा लोकगृहादौ कथमिति ? ॥ ३ ॥

उत्तरम्—चतुर्मासकमध्ये तीर्थंकराणां नगरादावयस्थानं प्रायो न भवति, यदि कदाचिद्भवेत्तदा यथौचित्येनैव पुष्पप्रक-

रादि क्रियमाणमेव संभाव्यतेऽन्यथा प्रातिहार्यनैयत्यं न स्यादिति ॥ ३ ॥

प्रश्नः—चतुर्मासकमध्ये समवसरणं स्यान्न वा ? तथा द्वादशपर्षदो नगरमध्ये कथं मान्तीति ? ॥ ४ ॥

उत्तरम्—चतुर्मासकमध्ये समवसरणकरणमपि न नियतं, कदाचिद्भवति कदाचिन्न भवत्यपि । पर्षदस्तु द्वादशापि नियता

एव तेन नगरमध्येऽपि सुखेन मान्तीति प्रतिभाति ॥ ४ ॥

प्रश्नः—गर्गाचार्यत्यक्तपञ्चशतसाधूनां साधुत्वं सम्भाव्यते न वा स्वेच्छाचारित्वात् ? ॥ ५ ॥

उत्तरम्—गर्गाचार्यत्यक्तशिष्याणां व्यवहारतः साधुत्वेऽपि परमार्थतः साधुत्वाऽभाव एव सम्भाव्यते ॥ ५ ॥

प्रश्नः—ग्रामनगरदेशादिस्थापना भरतेन कृता, बहलीअडम्बइल्लेत्यादिषु छद्मस्थो भगवान् विहृतवानिति तदा कथं देशाभिधानं कथितमिति ? ॥ ६ ॥

उत्तरम्—' बहलीअडम्बइल्ला ' इत्यादिषु छद्मस्थो भगवान् विहृतवान्, इत्यत्र भगवता स्वसुतानां राज्यप्रदानावसरे देशादिनामस्थापनायाः कृतत्वाद् न काऽप्यशङ्केति ॥ ६ ॥

## पण्डितडाहर्षिगणिकृतप्रश्नाः—

प्रश्नः—दत्तेऽमी सर्वसौख्यानि त्रिशुद्ध्याऽऽराधितो यतिः। विराधितश्च तैरश्च नरकाऽनल्पयातनाः ॥ ९० ॥ चारित्रिणो महामत्त्वा व्रतिनः सन्तु दूरतः। निष्क्रियोऽप्यगुणज्ञोऽपि न विराध्यो मुनि क्वचित् ॥ ९१ ॥ यादृशं तादृशं क्वापि दृष्ट्वा वेषधरं मुनिम्। गृही गौतमवद् भक्त्या पूजयेत् पुण्यकाम्यया ॥ ९२ ॥ वन्दनीयो मुनेर्वेषो न शरीरं हि कस्यचित्। व्रतिवेष ततो दृष्ट्वा पूजयेत् सुकृती जनः ॥ ९३ ॥ पूजितो निष्क्रियोऽपि स्याद्भक्त्या व्रतधारकः। अवनातः सत्क्रियोऽपि व्रते स्याच्छिथिलादरः ॥९४॥ दानं दया क्षमा शक्तिः सर्वमेवाल्पप्रसिद्धिकृत्। तेषां ये व्रतिनं दृष्ट्वा न नमस्यन्ति मानवा. ॥ ९५ ॥ आराधनीयास्तदमी त्रिशुद्ध्या जैनलिङ्गिनः। न कार्या सर्वथा तेषां निन्दा स्वार्थविघातिका ॥ ९६ ॥ कारणं तव कुष्टानां, महीपाल ! स्फुटं वदः। मा कदापि मुनीन् क्षुद्रानपि त्वं तु विराधयेः ॥ ९७ ॥ इति वृद्धशत्रुञ्जयमाहात्म्यद्वितीयसर्गमध्यगतश्लोकास्तेषां मध्ये केवललिङ्गमात्रधरोऽपि मुमुक्षुर्वन्दनीयो गौतमवत् पूजनीयश्च, तत्कथं केन हेतुनेति ? ॥ १ ॥

उत्तरम्—'दत्तेऽसौ मर्त्यसौख्यानि' इत्यादिशत्रुञ्जयमाहात्म्यद्वितीयसर्गमध्यगतश्लोकास्तु कारणिकविधिमाश्रित्य तीर्थोन्नायनबुद्ध्या वा कृताः सम्भाव्यन्ते इति न कश्चिद्दोष इति ॥ १ ॥

## वटपल्लीयपण्डितपद्मविजयगणिकृतप्रश्नाः—

प्रश्नः—पाक्षिकादिप्रतिक्रमणमध्ये चैत्यवन्दनादारभ्य किं सूत्रं यावत् पञ्चेन्द्रियच्छिन्दनं निवार्यते ? ॥ १ ॥

उत्तरम्—पाक्षिकादिप्रतिक्रमणमध्ये चैत्यवन्दनादारभ्य 'इच्छामो अणुसट्ठिं' यावत् पञ्चेन्द्रियच्छिन्दनं निवार्यमाणं परम्परया दृश्यते पर व्यक्ताक्षराणि नोपलभ्यन्ते ॥ १ ॥

प्रश्नः—पाक्षिकादिप्रतिक्रमणे क्रियमाणे च्छिक्कासद्भावे कुतः स्थानात् किं स्थानं यावत् पुन: प्रतिक्रमणं क्रियते ? ॥ २ ॥

उत्तरम्—पाक्षिकप्रतिक्रमणे पाक्षिकाऽतिचारालोचनादर्वाग् यदि छिक्का जायते तदा सत्यवसरे चैत्यवन्दनादि पुनः कर्तव्यमिति वृद्धसम्प्रदायः ॥ २ ॥

प्रश्नः—वन्दनकावसरे गुरोः पादचिन्तनं क्व विधेयम् ? ॥ ३ ॥

उत्तरम्—वन्दनकावसरे मुखवस्त्रिकायां रजोहरणे वा यत्र वन्दनकं ददाति तत्र गुरुपादौ चिन्तयति ॥ ३ ॥

प्रश्नः—सचविराहणपावं असंखगुणिय तु इक्कमसयम्मि । मूयस्सयसंखगुणं पावं इक्कस्स पाणस्स ॥ १ ॥ बेइंदिय तेइंदिय

---

१. अंतिमस्वाध्यायमित्यपि पाठः ।

चउरिंदिय चेव तह य पंचिंदी । लक्खसहस्सं तह सयगुणं च पावं मुणेयव्वं ॥ २ ॥ इति गाथाद्वयं कस्मिन् ग्रन्थे विद्यते ॥ ४ ॥

उत्तरम्—' मत्तविराहणपावं ' इत्यादि गाथाद्वयं छूटकपत्रेषु लिखितं दृश्यते परं न क्वापि ग्रन्थे ॥ ४ ॥

प्रश्नः—वन्दनकावसरे मुखवस्त्रिका कुत्र मुच्यते ? ॥ ५ ॥

उत्तरम्—वन्दनकावसरे मुखवस्त्रिका साधुभिर्वामजानुनि मुच्यते, श्रावकैस्तु गुरुपादयोर्वन्दनावसरे जानुनि, अन्यथा तु भूमौ रजोहरणे वेति ॥ ५ ॥

प्रश्नः—गुरुसन्निधौ पाश्चात्यप्रतिलेखनाक्रियां कुर्वाणाः श्राद्धाः स्वाध्यायमुपविश्य कुर्वन्ति ऊर्ध्वस्था [redacted] ? ॥ ६ ॥

उत्तरम्—गुरुसन्निधौ पाश्चात्यप्रतिलेखनाक्रियां कुर्वाणाः श्राद्धा ऊर्ध्वस्था स्वाध्यायं विदधति ॥ ६ ॥

## पण्डितकान्हर्षिगणिकृतप्रश्नाः—

प्रश्नः—श्राद्धानां रात्रौ जिनालये आरात्रिकोत्तारणं युक्तं न वा? ॥ १ ॥

उत्तरम्—श्राद्धानां जिनालये रात्रौ आरात्रिकोत्तारणं कारणे सति युक्तिमन्नाऽन्यथा ॥ १ ॥

प्रश्नः—कायोत्सर्गस्थितजिनप्रतिमानां चरणादिपरिधापनं युक्तं नवा ? ॥ २ ॥

उत्तरम्—जिनप्रतिमानां चरणादिपरिधापनं तु साम्प्रतीनव्यवहारेण न युक्तियुक्तं प्रतिभाति ॥ २ ॥

प्रश्नः—पाक्षिकप्रतिक्रमणे सम्बुद्धक्षामणादौ कृते 'इच्छकारि सुहपाखी सुखतपशरीरनिराबाधसुखसंयमयात्रानिर्वहइ' इत्यादि वचनं कथनीयं न वा ? ॥ ३ ॥

उत्तरम्—पाक्षिकप्रतिक्रमणे संबुद्धक्षामणादौ कृते 'इच्छकारि सुहपाखी' इत्यादि पठनमाधिकं संभाव्यते सामाचार्यादाव-दर्शनात् ॥ ३ ॥

## पंडितवानरगणिशिष्य पण्डितआणन्दविजयगणिकृतप्रश्नौ—

प्रश्नः—करम्बके तक्रे वा प्रक्षिप्तं सचित्तं जीरकमचित्तीभवति न वा ?, यदि वाऽचित्तीभवति तर्हि घटिकाद्वयाद् वा प्रहर-त्रयाद् वा रात्र्यतिक्रमाद् वा भवति ? ॥ १ ॥

उत्तरम्—करम्बकादौ क्षिप्तं सचित्तं जीरकं प्रासुकं न भवति इति ज्ञातमस्ति ॥ १ ॥

प्रश्नः—इक्षुखण्डानि छिन्नपर्वाणि सचित्तान्यचित्तानि वा ? घटिका द्वयात् सचित्तपरिहारिगृहस्थस्यात्तुं कल्पन्ते न वा ॥ २ ॥

उत्तरम्—इक्षुखण्डानि छिन्नपर्वाण्यपि सचित्तानीति ज्ञायते ॥ २ ॥

## पण्डितकाहनजीगणिकृतप्रश्नौ—

प्रश्नः—कश्चित् प्रातः सामायिकं गृहीत्वा घटिकामध्ये पौषधं गृह्णाति तस्य कल्पते न वा ? ॥ १ ॥

उत्तरम्—सामायिकं कृत्वाऽपूरितेऽपि सामायिके यदि कश्चित् पौषधं गृह्णाति तदा कल्पते ॥ १ ॥

प्रश्नः—मालतीकल्याद्रीनां स्वाध्यायो मण्डल्यां कल्पते न वा? ॥ २ ॥

उत्तरम्—आगमोक्तयतीनां सांप्रतीनाचार्याणां भट्टारकाणां च स्वाध्यायो मण्डल्यां कल्पते नैतदन्येषां वार्त्तमानिकोपाध्यायादीनामिति वृद्धवादः ॥ २ ॥

## उपाध्यायश्रीसुमतिविजयगणिशिष्य पण्डितगुणविजयगणिकृतप्रश्नाः—

प्रश्नः—यदि केनाप्यनुपयोगादिना साधुना सचित्तं लवणं गृहीतं पश्चात् ज्ञातं, तत्र को विधिः? ॥ १ ॥

उत्तरम्—केनाप्यनुपयोगादिना साधुना सचित्तं लवणं गृहीतं पश्चात् ज्ञातं तत्र को विधिरित्यत्र साधुस्तल्लवणं धनिकस्य निवेदयति—आयुष्मन्! त्वया ज्ञात्वाऽज्ञात्वा वा दत्तम्? तदनु अजानता मया दत्तं परमथ यूयं यथेच्छं भुङ्ग्ध्वमित्युक्ते तत्स्वयं भुङ्क्ते साधर्मिकेभ्यो वा ददाति कारणे सति, कारणाभावे तु परिष्ठापयतीत्युक्तम् आचाराङ्गद्वितीयश्रुतस्कन्धे पिण्डैषणाध्ययनदशमोद्देशके ॥ १ ॥

प्रश्नः—ये मनःप्रविचाराः सुरास्तैर्मनःपरिणामे कृते तदर्थं तास्तादृश्यो देव्यो मनसैव कथं प्रगुणीभवन्ति? तासां तदवबोधे किं ज्ञानमस्तीति? ऊर्ध्वमवधेः श्रुते स्तोकविषयत्वप्ररूपणादिति ॥ २ ॥

उत्तरम्—आनतकल्पादिस्थैर्मनःप्रविचारकैर्देवैर्मनःपरिणामे कृते सौधर्मेशानदेव्योऽपि तदर्थमुच्चावचानि मनांसि संप्रधारयन्त्यस्तिष्ठन्ति, परं देवानां मनःपरिणामं कथं जानन्ति? उपरिष्टादवधेरल्पत्वादिति, अत्र यथा दिव्यानु-

भावतः शुक्रपुद्गलास्तासां शरीरे रूपादितया परिणमन्ति तथा त्वरितमेव तासामङ्गस्फुरणादिना तदभिलापज्ञानमपि भवतीति ज्ञायते ॥ २ ॥

प्रश्नः—उपधानमालारोपणयोः किं फलमुद्दिश्य कर्त्तव्यता, यत्र च साऽभिहिता तदपि शास्त्रं व्यक्तया प्रसाद्यम् ॥ ३ ॥

उत्तरम्—उपधानमालारोपणयोः किं फलमुद्दिश्य कर्त्तव्यता, यत्र च साऽभिहिताऽस्तीत्यत्रोपधानवहनं श्रुताराधननिमित्तं, मालारोपणं तु तपस उद्यापनार्थं श्रीमहानिशीथादिशास्त्रे उक्तमस्ति ॥ ३ ॥

प्रश्नः—स्थापनाः कियति प्रदेशे ऊर्ध्वमधस्तिर्यक् च दूरे स्थापिताः क्रियाशुद्धिहेतवो भवन्तीति ? ॥ ४ ॥

उत्तरम्—स्थापनाः कियति प्रदेशे ऊर्ध्वमधस्तिर्यग् दूरे स्थापिताः क्रियाशुद्धिहेतवो भवन्तीत्यत्रोर्ध्वं मस्तकात्, पादयोरधस्तात्, तिर्यग् द्रष्टुमशक्ये स्थाने स्थापिताः स्थापनाः क्रियाशुद्धिनिमित्तं न भवन्तीति वृद्धवादः । यत्तूपरितनभूम्यादौ स्थापितासु तासु अधस्तनभूम्यादौ क्वापि क्रियायाः क्रियमाणत्वं तत्कारणिकमिति ज्ञेयम् ॥ ४ ॥

## पण्डितहापर्षिगणिकृतप्रश्नाः—

प्रश्नः—चतुर्दशपूर्वविदो यदाऽऽहारकं शरीरं कृत्वा महाविदेहादौ प्रेषयन्ति तदाऽन्तरालस्था जीवप्रदेशाः किं आहारिणोऽनाहारिणो वा ? यदि आहारिणः, किं औदारिकशरीरगृहीताहाराहारिणोऽथवाऽऽहारकशरीरगृहीताहाराहारिणो वेति ? ॥ १ ॥

उत्तरम्—कृताहारकशरीराणां चतुर्दशपूर्वविदामन्तरालस्थजीवप्रदेशानामाहारित्वमाश्रित्य ते आहारिण एव नत्वनाहारिणस्तत्रापि ये आत्मप्रदेशा यदौदारिकशरीरसम्बद्धास्ते तदौदारिकशरीरगृहीतान् पुद्गलानाहारयन्ति, ये त्वाहारकसंबद्धास्ते तद्गृहीतानिति ज्ञायते । यतः—" अविचलानष्टौ प्रदेशान् विहाय सर्वे आत्मप्रदेशा उत्तप्तभाजनोदकवदुद्वर्तमानास्सन्तीति " सिद्धान्तवचनादन्तरालवर्तित्वमपि नियतं नास्ति तेषां परावृत्तेः संभवात्तेन कदाचिदौदारिकशरीरसंबद्धत्वं कदाचिदाहारकशरीरसंबद्धत्वं च भवति, नत्वेकान्तेन येऽन्तरालवर्तिनस्तेऽन्तरालवर्तिन एव भवन्ति । किञ्च, ये यदाऽन्तरालवर्तिनस्तेऽपि औदारिकादिकाययोगितया स्वाभावादपुद्गलानाहारयन्तीति संभाव्यते विग्रहगत्यादिं विना जीवस्याऽनाहारित्वनिषेधादिति ॥ १ ॥

प्रश्नः—सिद्धजीवानां करचरणनासापादाङ्गुल्याद्यवयवाकारः संभाव्यते नवेति ? ॥ २ ॥

उत्तरम्—सिद्धजीवानां करचरणाद्याकारः संभाव्यते, यतः ' अरूविणो जीवघणा ' इत्यत्र घनाश्च शुषिरपूरणतो निचितप्रदेशतयेति श्रीशान्तिसूरिवचनेन शरीरान्तर्वर्त्तिशुषिरपूरणमेव दृश्यते न त्ववयवानां बाह्यान्तरं पूरणमिति । तथा श्रीहरिभद्रसूरि–श्रीमलयगिरिप्रमुखैरपि शुषिरपूरणमेवोक्तमस्तीति ॥ २ ॥

प्रश्नः—महानिशीथे नागिलेन यानि साधुदूषणानि कथितानि, तथा दूषणदर्शनाच्चते मुक्तास्तन्मार्गानुयायि न वेति ? ॥३॥

उत्तरम्—श्रीमहानिशीथोक्तनागिलेन ते माघ्यामामा अनाज्ञावर्त्तिनो दूषणदर्शनात् त्यक्तास्तन्मार्गानुयायि एव, असाधुकुगुरुपरिहारो हि मार्ग एवेति ॥ ३ ॥

प्रश्नः—ब्रह्मदत्तचक्रिणा स्वल्पादेवाऽऽयुषः कथं दिग्विजयः कृत इति ? ॥ ४ ॥

उत्तरम्—ब्रह्मदत्तस्य स्वल्पेन कालेन दिग्विजयो दिव्यानुभावादन्यदपि तस्य भूयो दिव्यानुभावसाध्यमभूदिति संभाव्यते॥४॥

प्रश्नः—स्त्रीरत्नं लोहपुरुषं स्पृशति तदा स गलति तत्कथम् ? ॥ ५ ॥

उत्तरम्—स्त्रीरत्नस्पर्शाल्लोहपुरुषगलनमुत्कृष्टातिशयकामविकारजनितप्रबलोष्णतापविशेषादिति ॥ ५ ॥

प्रश्नः—एकाकाशप्रदेशस्योत्कर्षतो धर्म्मास्तिकायसम्बन्धिसप्तप्रदेशस्पर्शनोक्ता तत्र विदिक्स्थितप्रदेशस्पर्शना कथं नोक्ता ? ॥६॥

उत्तरम्—एकस्याऽऽकाशप्रदेशस्य धर्म्माधर्म्मास्तिकायसत्कैर्दिक्स्थैः प्रदेशैरेव स्पर्शना न तु विदिक्स्थितैरयं चाऽर्थः समप्रमाणैश्चतुरस्रादिभिर्दिग्विदिक्स्थापितैः सुबोध एव ॥ ६ ॥

प्रश्नः—तीर्थंकराणां चतुर्दशसहस्रादिका साधुसङ्ख्योक्ता, चतुर्दशपूर्व्यादयः किं तत्सङ्ख्यामध्ये गण्यन्ते यदि वा ते भिन्नाः ? ॥ ७ ॥

उत्तरम्—तीर्थंकराणां चतुर्दशपूर्व्यादयश्चतुर्दशसहस्रादिपरिवारसङ्ख्यामध्ये गण्यन्ते न वेति प्रश्नमाश्रित्य " गणहरकेवलिमणओहिपुव्विवेउव्विवाइणं संखं । मुणिसंखाए सोहिआ नेया सामन्नमुणिसंखा ॥ १ ॥ " एगूणवीसलक्खा तह वासीई हवंति महस्साइं । इगवन्ना अहियाइं सामन्नमुणीण सव्वग्गं " ॥ तथा, अट्ठावीसं लक्खा अडयालीसं च तह सहस्साइं । सव्वेसिपि जिणाणं जइण माणं विणिदिट्ठं ॥ १ ॥ इति वचनयोरनुसारेण यथोक्तसङ्ख्यामध्ये गण्यन्ते चतुर्दशपूर्व्यादय इति संभाव्यते । तथा, पञ्चाशीतिसहस्राणि लक्षं सार्धशतानि षट् । परिवारेऽभवन् सर्वे

मुनयस्त्रिजगद्गुरोः ॥ १ ॥ एतदनुसारेण च श्रीऋषभदेवस्य चतुरशीतिसहस्रसङ्ख्यातो भिन्ना एव ते यतः सामान्यसाधुविशेषसाधुसङ्ख्यामिलनेन यथोक्तसङ्ख्यासंभावनया पूर्यमाणास्तीति तत्त्वं तु सर्वविद्वेद्यम् ॥७॥

प्रश्नः—चक्री वैक्रियं रूपं कृत्वा स्त्रियं भुनक्ति तत्र संतानं स्यान्न वा ? ॥ ८ ॥

उत्तरम्—चक्रिणो वैक्रियशरीरेण संतानोत्पत्तिर्न संभाव्यते किन्त्वौदारिकेणैव, केवलं ते वैक्रियशरीरान्तर्गता इति न गर्भाधानहेतव इति प्रज्ञापनावृत्तिवचनात् । या च खिलादित्यादीनां सूर्यादिरुत्पत्तिः श्रूयते तत्रापि समाधानं कृतमस्ति । तथेदम्–वैक्रियेभ्यः सुराङ्गेभ्यो गर्भो यद्यपि नोद्भवेत् । तदानीतौदारिकाङ्गधातुयोगात्तु संभवी ॥ १ ॥ इत्यादि मल्लवादिग्रन्थे ॥ ८ ॥

इति सकलसूरिपुरंदरपरमगुरुतपागच्छाधिराजभट्टारकश्री५श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुच्चिते द्वितीयः प्रकाशः ॥

# अथ तृतीयः प्रकाशः

## पुनर्महोपाध्यायश्रीकल्याणविजयगणिकृतप्रश्नाः—

प्रश्नः—श्राद्धविधौ चतुर्दशनियमाधिकारे सचित्तविकृतिवर्जं यन्मुखे क्षिप्यते तत्सर्वं द्रव्यमिति भणनादनाहारत्रिफलादि मुखे क्षिप्तं द्रव्यमध्ये गण्यते न वा ? ॥ १ ॥

उत्तरम्—त्रिफलाद्यनाहारवस्तु द्रव्यमध्ये गण्यते नवा तत्रैवं प्रतिभाति—यत् अनाहारवस्तु प्रायो द्रव्यमध्ये गण्यते, यदि च प्रत्याख्यानावसरे तदगणनमेव विवक्षितं तदा न गण्यतेऽपि यथा सचित्तविकृत्योर्द्रव्यमध्ये ग्रन्थेऽगणनेऽभिहितेऽपि संप्रति बहवो जनाः प्रायस्तयोर्द्रव्यमध्ये गणनां कुर्वाणा उपलभ्यन्ते इति ॥ १ ॥

प्रश्नः—ग्रन्थिसहितप्रत्याख्याने तन्मोचनेऽनाहारो मुखे क्षिप्तः शुध्यति नवा ? ॥ २ ॥

उत्तरम्—ग्रन्थिसहितप्रत्याख्याने मुक्तेऽपि कारणेऽनाहारवस्तुग्रहणं कल्पते इति ज्ञायते ॥ २ ॥

प्रश्नः—ऊर्ध्वरथिकशब्दोऽस्ति उत्तराध्ययनबृहद्वृत्तौ प्रथमपत्रे, स कस्य वाचकः ? ॥ ३ ॥

उत्तरम्—ऊर्ध्वरथिकशब्दमाश्रित्य उत्तराध्ययनविषमपदपर्याये द्रुमकवाचकत्वमुक्तमस्ति ॥ ३ ॥

प्रश्नः—षण्मासातिक्रमसंभवे पर्युषणाया अर्वागुपस्थापना भवति न वेति ? तदनन्तरमपि विजयदशम्या अर्वाक् परतो वा ? ॥४॥

उत्तरम्—षण्मासाऽतिक्रमसंभवे पर्युषणाया विजयदशम्याश्चाऽर्वागपि उपस्थापना क्रियतेऽन्यथा तु विजयदशम्याः पश्चादेव ॥ ४ ॥

प्रश्नः—पूर्णिमाऽमावास्ययोर्वृद्धौ पूर्वमौदयिकी तिथिराराध्यत्वेन व्यवह्रियमाणाऽऽसीत् । केनचिदुक्तं श्रीतातपादाः पूर्वतनीमाराध्यत्वेन प्रसादयन्ति तत्किमिति ? ॥ ५ ॥

उत्तरम्—पूर्णिमाऽमावास्ययोर्वृद्धौ औदयिक्येव तिथिराराध्यत्वेन विज्ञेया ॥ ५ ॥

प्रश्नः—अन्यदर्शनीनां धर्मानुष्ठानमनुमोदनीयं न वा ? ॥ ६ ॥

उत्तरम्—अन्यदर्शनीनामपि यन्मार्गानुसारि धर्मकृत्यं तच्छास्त्रानुसारेणाऽनुमोदनार्हं ज्ञायते इति ॥ ६ ॥

प्रश्नः—उपस्थापनाकरणानन्तरं कियत्सु योगदिनेष्ववशिष्टेषु सत्सु मान्द्यादिहेतुना यदि षण्मास्यतिक्रामति तदा पुनः प्रव्रज्यायोगोद्वहनपूर्वकमुपस्थापना क्रियते । तत्र प्रव्रज्या गच्छनायकेनाऽन्येन वा प्रदेयेति ॥ ७ ॥

---

१ तिथयो ह्युदयव्यापिन्यः काश्चन, काश्चनोदयास्तव्यापिन्यो भवन्ति, वृद्धिस्थले पूर्वा तिथिरुदयास्तव्यापिनी, उत्तरद्वितीया च केवलोदयव्यापिनी भवति । तत्र कोपास्येति शङ्कायामौदयिक्येवेत्युक्तम्–तथा चोदयव्यापिन्येव ग्राह्येति भावः । एव शब्देन चोदयास्तव्यापिन्या अप्रयोजकत्वं प्रदर्शितम् । यथातिरिक्तस्थले ह्युदयव्यापित्वमुपास्यतायां प्रयोजकं नत्वस्तव्यापित्वमपि तद्वदत्रापीति हृदयम् । एतेन पर्वतिथेर्वृद्धौ तत्पूर्वतन्या अपर्वतिथेर्वृद्धिः कार्येति मतमपास्तम् । तस्या वृद्धौ प्रमाणाभावात् अतएव क्षये पूर्वा तिथिर्ग्राह्या वृद्धौ ग्राह्या तथोत्तरेत्यादि वचनमपि सङ्गतमिति ध्येयम् ॥

उत्तरम्—उपस्थापनाकरणानन्तरमित्यत्र प्रव्रज्या गच्छनायकेन विधेया ॥ ७ ॥

प्रश्नः—श्रीआचार्यादीनां वाचनादानमङ्गोपाङ्गवाचनानन्तरं छेदग्रंथप्रकीर्णकादिसंबन्धि अङ्गविद्याप्रकीर्णकं यावत् केनाऽनुक्रमेण भवति ? ॥ ८ ॥

उत्तरम्—श्रीआचार्यादीनां वाचनाक्रममाश्रित्य किञ्चिद् वाचनामतकच्छूटकपत्रस्थविधिनाऽथवा सामाचार्यन्तरगतयोगविध्यनुसारेण च क्रियमाणमस्तीति बोध्यम् ॥ ८ ॥

प्रश्नः—श्रीभगवत्यनुसारेण कर्णिकावृत्ति-वीरचरित्रानुसारेण च जमालेः कियन्तो भवाः ? ॥ ९ ॥

उत्तरम्—भगवतीसूत्र-कर्णिकावृत्ति-वीरचरित्राद्यनुसारेण जमालेः पञ्चदश भवा ज्ञायन्ते ॥ ९ ॥

प्रश्नः—वण्णगंधोवमेहिं चेति श्लोकव्याख्याने श्राद्धदिनकृत्ये प्रोतपुष्पैः पूजनाक्षराणि वर्तन्ते, तत्र शालिकाः पाठान्तर वृत्तिभिन्नार्थं कुर्वते, खाद्यास्तु मन्यन्त एव न, तद्विषये यद्यन्यान्यप्यक्षराणि भवन्ति तदा तानि प्रसाद्यानि ? ॥ १० ॥

उत्तरम्—प्रोतपुष्पैः पूजनाक्षराणि सांप्रतं श्राद्धदिनकृत्यसत्कानि ज्ञातानि सन्ति ॥ १० ॥

प्रश्नः—महाहिंसावत्त्वेनाश्विनचैत्रदिनानि सिद्धान्तवाचनादिषु अस्वाध्यायदिनानीति कृत्वा त्यज्यन्ते, तद्वत् ईददिनमपि तेन हेतुना कथं न त्यज्यते ? केचिच्च मतिनस्तद्दिनं त्यजन्ति, आत्मनां का मर्यादा ? ॥ ११ ॥

उत्तरम्—ईददिनाऽस्वाध्यायविषये वृद्धाचरणमेव निमित्तमवसीयते ॥ ११ ॥

## पुनः पण्डितजगमालगणिकृतप्रश्नाः—

प्रश्नः—रात्रौ ये सुखभक्षिकां भक्षयन्ति तेषां सान्ध्यप्राभातिकप्रतिक्रान्तिः शुद्धिमती अन्यथा वा ? ॥ १ ॥

उत्तरम्—रात्रौ ये सुखभक्षिकां भक्षयन्तीत्यत्र " अविहिकया वरमकयं उस्सुहवयणं कहंति गीयत्था । पायच्छित्तं जम्हा अकए गुरुअं कए लहुअं ॥ १ ॥ इति प्रतिक्रमणहेतुगर्भगाथानुसारेण प्रतिक्रमणकरणमेव सुन्दरं प्रतिभाति ॥ १ ॥

प्रश्नः—रात्रौ भुक्तिमतां प्रातर्नमस्कारसहिताद्यपोषणप्रमुखप्रत्याख्यानं शुध्यति न वा ? ॥ २ ॥

उत्तरम्—रात्रौ भुक्तिमतां प्रातर्नमस्कारसहिताद्यपोषणप्रमुखप्रत्याख्यानं शुध्यति परं भ्राजते नेति ॥ २ ॥

प्रश्नः—चतुर्मासकमध्ये साधूनां नगरप्रवेशनिर्गमे पादप्रमार्जनं भवति न वा ?[1] ॥ ३ ॥

उत्तरम्—चतुर्मासकमध्ये साधूनां नगरादिप्रवेशनिर्गमे पादप्रमार्जनं भवति न वेत्यत्र रजोऽवगुण्ठनसद्भावे सति विधीयते नान्यथा ॥ ३ ॥

प्रश्नः—तपागणवर्त्तिवाचंयमवृन्दं विनाऽन्यत्र चारित्रश्रद्धानं क्रियते न वा ? ॥ ४ ॥

उत्तरम्—तपागणवर्त्तिवाचंयमवृन्दं विनाऽन्यत्र चारित्रश्रद्धानं क्रियते नवेत्यत्र तपागणादन्यत्र चारित्रं न श्रद्धीयते इत्येकान्तो नास्ति ॥ ४ ॥

प्रश्नः—यथा वनस्पत्यादिषु जीवा एकावतारिणः शास्त्रे उक्तास्तथा मतान्तरीयवृन्दमध्येऽपि कश्चिद् भवति न वा ? ॥५॥

१ सुपडीति भाषायाम् ।

उत्तरम्—यथा वनस्पत्यादिषु जीवा एकावतारिणः शास्त्रे उक्तास्तथा मतान्तरीयवृन्दमध्ये कश्चिद् भवति न वेत्यत्र एकान्तेन निषेधो ज्ञातो नास्ति ॥ ५ ॥

प्रश्नः—कथञ्चित्कारणे योगोद्वहनं विना कल्पसूत्रवाचनस्याऽनुज्ञा न वा ? ॥ ६ ॥

उत्तरम्—कथञ्चित्कारणे योगोद्वहनं विना कल्पसूत्रवाचनस्याऽनुज्ञा न वेत्यत्र कारणे तद्वाचनं कैश्चिद् क्रियमाणमस्ति अक्षराणि तु नोपलभ्यन्ते ॥ ६ ॥

प्रश्नः—कार्मिकभुक्तिमतां मध्ये वसन् शुद्धग्राही साधुर्भवति न वा ? ॥ ७ ॥

उत्तरम्—कार्मिकभुक्तिमतां मध्ये वसन् शुद्धग्राही साधुर्भवति नवेत्यत्र कारणे सति कार्मिकभोज्यपि यदि साधुर्भवति तर्हि तद्भुक्तिमन्मध्ये वसतः शुद्धग्राहिणः साधुत्वे का शङ्का ?, कारणाऽभावे तु द्वयोरपि साधुत्वे विचार एवास्ति॥७॥

प्रश्नः—देशविरतिमन्तरेण ये प्रतिक्रान्तिं कुर्वन्ति श्राद्धास्तेषां प्रतिक्रान्तिः फलवती न वा ? ॥ ८ ॥

उत्तरम्—देशविरतिमन्तरेण ये प्रतिक्रान्तिं कुर्वन्ति श्राद्धास्तेषां प्रतिक्रान्तिः फलवती न वेत्यत्र सा फलवतीति विज्ञायते, श्राद्धकुलोत्पन्नत्वेनोच्चारामावेऽपि देशविरतिपरिणामसद्भावात्; सामायिकोच्चारस्य विरतिरूपत्वाद्भावविशुद्धेश्चेति ॥ ८ ॥

प्रश्नः—निम्बुकरसभावितोऽजमकस्तद्भावितं विश्वभेषजं च द्विविधाहारे कल्पते न वा ? ॥ ९ ॥

उत्तरम्—निम्बुकरसभावितोऽजमकस्तद्भावितं विश्वभेषजं च द्विविधाहारे आचाम्ले च न कल्पते इति ॥ ९ ॥

प्रश्नः—श्वेतसैन्धवाऽचित्तताया अक्षराणि कुत्र सन्ति ? ॥ १० ॥

उत्तरम्—श्वेतसैन्धवाचित्ततायाः अक्षराणि श्राद्धविधौ वर्तन्ते ॥ १० ॥

प्रश्नः—तैलादिमानेनाऽऽदेशप्रदानं शुध्यति न वा ? ॥ ११ ॥

उत्तरम्—तैलादिमानेन प्रतिक्रमणाद्यादेशप्रदानं न सुविहिताचरितं परं क्वापि क्वापि तदभावे जिनभवनादिनिर्वाहाऽसंभवेन निवारयितुमशक्यमिति ॥ ११ ॥

प्रश्नः—मण्डलिबहिःस्थगीतार्थमिलने व्याख्यानकरणे गृहस्थवर्गक्षामणे को विधिरत्र वृद्धो मण्डलिबहिस्थः समेति तदा लघुना पङ्क्तिमोचनाऽभ्युत्थानादि विधेयं न वेति ? मण्डलीबहिःस्थपार्श्वे श्राद्धश्राद्धीभिरुपधानाद्यनुष्ठानं विधेयं न वेति स्पष्टतया प्रसाद्यम् ॥ १२ ॥

उत्तरम्—मण्डलीबहिःस्थेन व्याख्यानं न विधेयमन्यव्याख्यातृसद्भावे, वन्दनोत्थानादिव्यवहारस्तु तस्यापि विधेय एव । किञ्च, अन्येषामभावे स श्राद्धश्राद्धीनामुपधानादिक्रियां कारयति ॥ १२ ॥

प्रश्नः—वर्णान्तरप्राप्तं कसेल्लकनीरं प्रासुकं भवति न वा ? ॥ १३ ॥

उत्तरम्—वर्णान्तरप्राप्तं कसेल्लकनीरं प्रासुकं, परमात्मवृद्धैरनाचीर्णमिति ज्ञेयम् ॥ १३ ॥

## पण्डितआनन्दसागरगणिकृतप्रश्नाः—

प्रश्नः—चैत्यालये चैत्यवन्दनकरणं ईर्यापथिकीप्रतिक्रमणपुरस्सरमेव, अन्यथापि वा ? ॥ १ ॥

उत्तरम्—चैत्यालये ईर्यापथिकीपुरस्सरं चैत्यवन्दनकरणविषये एकान्तो नास्तीति ज्ञायते ॥ १ ॥

प्रश्नः—नमस्कारसहितप्रत्याख्यानं रात्रिप्रत्याख्यानमध्ये, पृथग् वा ?, तेन प्रत्याख्यानेन श्राद्धः पौरुषीं यावत्स्थितस्तस्य पौरुष्या लाभो, द्विघटिकासत्को वा ? ॥ २ ॥

उत्तरम्—नमस्कारसहितप्रत्याख्यानं दिनमध्ये आयाति न तु रात्रिमध्ये, तथा तत्प्रत्याख्यानं विधाय पौरुषीं यावदनुपयोगेन स्थीयते तदा न लाभाय, उपयोगपूर्वन्तु लाभायेति ॥ २ ॥

प्रश्नः—त्रिषष्टिशलाकापुरुषा गार्हस्थ्येऽष्टमादितपःकारित्वेन विरतिमन्तोऽन्यथा वा ? ॥ ३ ॥

उत्तरम्—त्रिषष्टिशलाकापुरुषा गार्हस्थ्ये विरतिमन्तो न श्रूयन्तेऽष्टमादितपोविधानं तु संसारिककार्यार्थं न तु निर्जरार्थम् ॥३॥

प्रश्नः—युगपत्कृतसामायिकपौरुषयोर्मध्ये एकेन संपूर्णे सत् पारितं, द्वितीयेन पौरुषीं यावत्स्थितं, द्वयोर्लाभे साम्यं विशेषो वा ? ॥ ४ ॥

उत्तरम्—कृतसामायिकस्य श्राद्धस्य घटिकाद्वयस्योपरिष्टात्सामायिकपालनमुपयोगे सति लाभाय, अनुपयोगे तु अतिचारायेति ज्ञातमस्ति ॥ ४ ॥

प्रश्नः—श्राद्धानां पौरुष्यादिप्रत्याख्यानं चतुर्विधाहारमेव भवति अन्यथापि वा ? ॥ ५ ॥

उत्तरम्—श्राद्धानां पौरुष्यादिप्रत्याख्यानं चतुर्विधाहारमेव भवति अन्यथापि वेत्यत्र "निसि पोरसि पुरिमेगासणाइं सड्ढाण दुतिचउहा" इति भाष्यवचनात् द्विविधाहारं त्रिविधाहारं चतुर्विधाहारं वा कर्तुं कल्पते इति ॥ ५ ॥

पुनः पण्डितकान्हर्षिगणिकृतप्रश्नाः—

प्रश्नः—श्रीमहावीरस्य वन्दनार्थं स्वविमानेन चन्द्रसूर्यौ समागतौ, ततस्तत्र तारकविमानानामन्तरालस्याऽल्पत्वेन महतोस्त-योर्विमानयोरागमनं कथं संगच्छते ? ॥ १ ॥

उत्तरम्—श्रीमहावीरस्य वन्दनार्थं स्वविमानेन चन्द्रसूर्यौ समागतौ ततस्तत्र तारकविमानानामन्तरालस्याऽल्पत्वेन महतो-स्तयोर्विमानयोरागमनं कथं संगच्छते इत्यत्र यथा तयोः स्वविमानेनागमनमाश्चर्येऽन्तर्भवति तथा तारकविमा-नेऽन्तरालप्रवेशोऽपीति संभाव्यते ॥ १ ॥

प्रश्नः—तीर्थकृतां कल्याणकेषु सौधर्मेन्द्रादयो नन्दीश्वरद्वीपवर्तिरतिकरपर्वतेषु विमानसंकोचं विधायाऽत्राऽऽयान्ति तदा स्थिर-तारकाणां मध्ये तानि कथं निर्गच्छन्ति ? अन्तरस्याल्पत्वात् ॥ २ ॥

उत्तरम्—तीर्थकृतां कल्याणकेषु सौधर्मेन्द्रादयो नन्दीश्वरद्वीपवर्तिरतिकरपर्वतेषु विमानसंकोचं विधायाऽत्राऽऽयान्ति तदा स्थिरतारकाणां मध्ये तानि कथं निर्गच्छन्ति अन्तरस्याल्पत्वात्, इत्यत्र 'तारस्सय तारस्सय जंबुद्दीवंमि अंतरं गुरुअं' इत्यादि जम्बूद्वीपे यथा तारकाणामन्तरालमानमुक्तमस्ति तथाऽन्यत्रान्तरालमानस्याश्रवणान्न काप्या-शङ्का इति ॥ २ ॥

प्रश्नः—कृतचतुर्थप्रत्याख्यानस्य श्राद्धस्य पारणके उत्तरपारणके च द्विविधाहारप्रत्याख्यानं कल्पते न वा ? ॥ ३ ॥

१ तारकविमानानामितस्ततो भवनात् तथा संभाव्यत इति भावः ॥

उत्तरम्—कृतचतुर्थप्रत्याख्यानस्य श्राद्धस्य पारणके उत्तरपारणके च द्विविधाहारप्रत्याख्यानं कल्पते न वेत्यत्र परंपरया त्रिविधाहारप्रत्याख्यानं क्रियमाणं दृश्यते ॥ ३ ॥

प्रश्नः—श्रीभगवतीसूत्रदशमशतकस्यैकादशोद्देशके देवानामायुःस्थितिस्थानानि वर्षसहस्रदशकादारभ्य समयवृद्ध्या त्रयस्त्रिंशत्सागरोपमपर्यन्तानि उक्तानि सन्ति, तत्र सर्वेषु स्थानेषु देवा लभ्यन्ते न वा ? ॥ ४ ॥

उत्तरम्—श्रीभगवतीसूत्रस्य दशमशतकस्यैकादशोद्देशके देवानामायुषां स्थितिस्थानानि वर्षसहस्रदशकादारभ्य समयवृद्ध्या त्रयस्त्रिंशत्सागरोपमपर्यन्तानि उक्तानि सन्ति, तत्र सर्वेषु स्थानेषु देवा लभ्यन्ते न वेत्यत्र सर्वेषु स्थानेषु वर्तन्ते इति नियमो ज्ञातो नास्ति ॥ ४ ॥

प्रश्नः—दिगम्बरमतोत्पत्तिमूलं सहस्रमल्लस्तस्य गुरुः किंनामा ? ॥ ५ ॥

उत्तरम्—दिगम्बरमतोत्पत्तिमूलं सहस्रमल्लस्तस्य गुरुः किंनामेत्यत्र "कृष्णाचार्य" इति आवश्यकवृत्तौ तदधिकारे उक्तमस्ति ॥ ५ ॥

प्रश्नः—श्रीआदिनाथस्य समवसरणे यदि तत्कालवर्तिमनुष्यशरीरप्रमाणशरीरैर्देवा आयान्ति स्म तर्हि तारामण्डलमध्ये शरीरानुसारतो महतां तद्विमानानां प्रवेशः कथं सङ्गच्छते ? तारकान्तराणामल्पत्वादिति ॥ ६ ॥

उत्तरम्—श्रीआदिनाथस्य समवसरणे यदि तत्कालवर्तिमनुष्यशरीरप्रमाणैः शरीरैर्देवा आयान्ति स्म तर्हि तारामण्डलमध्ये शरीरानुसारतो महतां तद्विमानानां प्रवेशः कथं सङ्गच्छते ? तारकान्तराणामल्पत्वादित्यत्र नन्दीश्वरे विमानसं-

कोचं विधाय तिर्यग् जम्बूद्वीपे समागच्छतां देवानामन्तराले तारकाणाममावान्न काप्याशङ्का ॥ ६ ॥

प्रश्नः—श्राद्धानां द्वादशव्रतोच्चारे कन्यालीकादिविरमणव्रते कृते सति स्वकन्याविषये कापि यतनाऽस्ति न वा ? ॥ ७ ॥

उत्तरम्—श्राद्धानां द्वादशव्रतोच्चारे कन्यालीकादिविरमणव्रते कृते सति स्वकन्याविषये काऽपि यतनाऽस्ति न वेत्यत्र यतना विद्यते यतः " दक्खिणाइअविसय " इति तदुच्चारे समाचार्यादौ उक्तमस्तीति ॥ ७ ॥

प्रश्नः—दिवा चतुर्दशनियमग्रहणे सति मैथुनस्य दूरगमनस्य च प्रयोजनाऽभावाद् निषेधे कृते रात्रौ तयोर्मुत्कलीकरणं कल्पते न वा ? ॥ ८ ॥

उत्तरम्—दिवा चतुर्दशनियमे ग्रहणे सति मैथुनस्य दूरगमनस्य च प्रयोजनाऽभावान्निषेधे कृते रात्रौ तयोर्मुत्कलीकरणं कल्पते न वेत्यत्र कल्पते इति ज्ञातमस्ति ॥ ८ ॥

प्रश्नः—देसियराइयपक्खियचाउम्मासे तहेव वरिसे य। इक्किके तिन्नि गमा नायव्वा पंचसेएसु ॥ १ ॥ इति कायोत्सर्गनिर्युक्तिगतचतुर्नवतितमगाथायाः कोऽर्थः ? ॥ ९ ॥

उत्तरम्—देसियराइयपक्खियचाउम्मासे तहेव वरिसे य। इक्किके तिन्नि गमा नायव्वा पंचसेएसु ॥ १ ॥ इति कायोत्सर्गनिर्युक्तिचतुर्नवतितमगाथार्थो हारिभद्रायां वृत्तौ यथा—देसियत्ति दैवसिके प्रतिक्रमणे दिवसेन निर्वृत्तंदैवसिकम्, राइयत्ति रात्रिके, पक्खियत्ति पाक्षिके, चाउम्मासियत्ति चातुर्मासिके, तहेव वरिसेय त्ति तथैव वार्षिके च, वर्षेण निवृत्तं वार्षिकं सांवत्सरिकमिति भावना। एकैकस्मिन् प्रतिक्रमणेदैवसिकादौ त्रयो गमा ज्ञातव्याः। पञ्चस्वेतेषु

दैवसिकादिषु कथं त्रयो गमाः ? सामायिकं कृत्वा कायोत्सर्गकरणं, सामायिकं कृत्वा प्रतिक्रमणं, सामायिकमेव कृत्वा पुनः कायोत्सर्गकरणमिह यस्माद्दिवसादितीर्थे दिवसप्रधानं च तस्माद्दैवसिकमादाविति गाथार्थः ॥ ९ ॥

## पुनः पण्डितनगर्षिगणिकृतप्रश्नाः—

प्रश्नः—यत्रैको बादरपर्याप्तस्तत्र तन्निश्रयाऽसंख्याता अपर्याप्ता भवन्तीत्यत्राज्ञैव प्रमाणम्, युक्तिर्वा ? ॥ १ ॥

उत्तरम्—यत्रैको बादरपर्याप्तस्तत्र तन्निश्रयाऽसंख्याता अपर्याप्ता भवन्तीत्यत्राज्ञैव प्रमाणं, युक्तिस्तु दृष्टा नास्तीति ॥ १ ॥

प्रश्नः—संपूर्णो धर्मास्तिकायो द्रव्यमुच्यते स्कन्धो वा ? ॥ २ ॥

उत्तरम्—संपूर्णो धर्मास्तिकायो द्रव्यमुच्यते, कुत्रचित् स्कन्धोऽपि उपचारात्, नाऽत्र किमपि बाधकं ज्ञायते ॥ २ ॥

प्रश्नः—परमाणोर्वर्णादिपरावर्तो जायते न वा ? ॥ ३ ॥

उत्तरम्—परमाणोर्वर्णादिपरावर्त्तो जायते न वेत्यत्र जायते इति ज्ञेयम् ॥ ३ ।

प्रश्नः—गौतमस्वामी गोचरचर्यामेकाक्येव गतवानथवा ससङ्घाटिकः ? ॥ ४ ॥

उत्तरम्—गौतमस्वामी गोचरचर्यामेकाक्येव गतवानथवा ससङ्घाटिक इत्यत्र प्राय एकाक्येव भगवत्याद्यागमे श्रूयते, परमागमविहारित्वेनोचिताऽनुचितविचारो न युक्तिमान् ॥ ४ ॥

प्रश्नः—ग्रैवेयकादिषु जलं नास्तीति तत्रत्या देवाः कथं जिनपूजां कुर्वन्ति ? ॥ ५ ॥

उत्तरम्—ग्रैवेयकादिषु जलं नास्ति, तत्रत्या देवाः कथं जिनपूजां कुर्वन्ति ? जलवद् वनस्पतिरपि तत्र नास्तीति तेषां देवानां प्रायो गमनागमनादिप्रयोगाऽभावात् पूजोपस्काराऽभावाच्च द्रव्यतो जिनपूजाकरणं न संभवतीति बोध्यम् ॥ ५ ॥

प्रश्नः—सूक्ष्मबादरा निगोदाः पर्याप्ता अपर्याप्ताश्च, एकस्मिन्निगोदेऽनन्ता जीवाः; अत्र निगोदः कः जीवाश्च के ? इति व्यक्त्या प्रसाद्यम् ? ॥ ६ ॥

उत्तरम्—सूक्ष्मबादरा निगोदाः पर्याप्ता अपर्याप्ताश्चैकस्मिन् निगोदेऽनन्ता जीवाः, अत्र निगोदः कः जीवाश्च के; इत्यत्र निगोदशब्देनैकं शरीरं वनस्पतिरूपं साधारणमनन्तजीवजनितमुच्यते, तत्र चानन्ता जीवास्तिष्ठन्ति अत एव अनन्तकायिका जीवाः साधारणा उच्यन्ते ॥ ६ ॥

प्रश्नः—यदा चतुर्दश्यां कल्पो वाच्यते, अमावास्यादिवृद्धौ वा अमावास्यायां प्रतिपदि वा कल्पो वाच्यते तदा षष्ठतपः क्व विधेयम् ? ॥ ७ ॥

---

१ अथामावास्यादि वृद्धाविति प्रश्नेन तिथीनां क्षयवृद्धी स्वीकृते, ननु तत्र त्रयोदश्याः क्षयवृद्धीस्वीकृत इति स्पष्टं विज्ञायते। तथाहि-द्वादश्याद्या-चतुर्थि कस्या अपि तिथेः क्षये एकादशीतः पर्वारंभः, त्रयोदश्यादि वृद्धौ च त्रयोदशीतः प्रारंभः, द्वादश्याद्या-चतुर्दशि कस्या अपि क्षये अमायामेव कल्पवाचना, अमाद्या चतुर्थि कस्या अपि क्षये च चतुर्दश्यां कल्पवाचना, त्रयोदश्यादि यावदमावास्यं कस्या अपि वृद्धावमायां, प्रतिपदाद्या-चतुर्थि वृद्धौतु प्रतिपदि कल्पवाचना। तत्रामावृद्धौ द्वितीया-मायां, प्रतिपद्वृद्धा वाद्यप्रतिपदीतिविशेषः। त्रयोदशी चतुर्दश्योर्वृद्धौ, द्वादशी त्रयोदशी चतुर्दशीनां क्षये च षष्ठ तपसोऽनुपपत्तिर्नास्ति। अमाया वृद्धौ

उत्तरम्—यदा चतुर्दश्यां कल्पो वाच्यते इत्यत्र षष्ठतपोविधाने दिननैयत्यं नास्तीति यथारुचि तद्विधीयतामिति कोऽत्राग्रहः ? ॥ ७ ॥

प्रश्नः—तीर्थंकराः समवसरणस्थाः किं गृहिवेषेण यतिवेषेण वा दृश्यन्ते इति ? ॥ ८ ॥

उत्तरम्—तीर्थंकराः समवसरणस्थाः किं गृहिवेषेण यतिवेषेण वा दृश्यन्ते, इत्यत्र न गृहिवेषेण नापि यतिवेषेण तीर्थंकरा दृश्यन्ते किंतु लोकोत्तररूपेण, अत एवाऽमुकसदृशा इति वक्तुं न शक्यते " न य नाम अन्नलिंगे नो गिहिलिंगे वा " इत्यादिवचनात् ॥ ८ ॥

प्रश्नः—गणधराः प्रतिक्रमणं कुर्वाणाः स्थापनां कुर्वन्ति न वा ? कुर्वाणा अपि तीर्थंकरस्याऽन्यस्य वेति ? ॥ ९ ॥

उत्तरम्—गणधराः प्रतिक्रमणं कुर्वाणाः स्थापनां कुर्वाणा अपि तीर्थंकरस्यान्यस्य वेत्यत्र तीर्थंकरस्य देवगुरुरूपत्वेन तत्समीपे प्रतिक्रमणादि कुर्वतां स्थापनाप्रयोजनं न स्यात्, जिनपरोक्षे कुर्वतां तु स्थापनाकरणमात्मनामिवेति संभाव्यते ॥ ९ ॥

---

चतुर्दशी कल्पवाचनादि तयोरामावास्ययाव्यवहितत्वेन, प्रतिपदादि वृद्धौ तु पर्वद्वितीय दिवसस्य चतुर्दशीत्वात् पारणाया अनौचित्येन च षष्ठतपः क्वाकार्यमिति प्रश्नो जागर्ति । यदि अमावास्या वृद्धौ त्रयोदश्या वृद्धिः स्यात्तदाऽमावास्यादि वृद्धाविति प्रश्न एव नोदीयात् । प्रतिपदादि वृद्धाविरयेत्रोच्येत । एवममायाः क्षये त्रयोदशी क्षयेकृतेऽमायां कल्पवाचना प्राप्तौ तपसोऽनुपपत्त्यभावेन शंकानोदीयादेवेतिरिक ॥

प्रश्नः—गुरुपूजासत्कं सुवर्णादिद्रव्यं गुरुद्रव्यमुच्यते न वा ? ॥ १० ॥

प्रश्नः—तथा प्रागेवं पूजाविधानमस्ति न वा ? ॥ ११ ॥

प्रश्नः—कुत्र चैतदुपयोगीति प्रसाद्यम् ॥ १२ ॥

उत्तरम्—गुरुपूजासत्कं सुवर्णादिद्रव्यं गुरुद्रव्यमुच्यते न वा ? तथा प्रागेवं पूजाविधानमस्ति न वा ? तथा कुत्र चैतदुपयोगीत्यत्र गुरुपूजासत्कं सुवर्णादिगुरुद्रव्यं न भवति, स्वनिश्रायामकृतत्वात्, स्वनिश्राकृतं च रजोहरणाद्यं गुरुद्रव्यमुच्यते इति ज्ञायते १॥ तथा हेमाचार्याणां कुमारपालराजेन सुवर्णकमलैः पूजा कृतास्ति, एतदक्षराणि कुमारपालप्रबन्धे सन्ति २॥ तथा "धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये । सूरये सिद्धसेनाय ददौ कोटिं नराधिपः " ॥ १ ॥ इदं चाग्रपूजारूपं द्रव्यं तदानींतनसङ्घेन जीर्णोद्धारे व्यापारितमिति तत्प्रबन्धादौ श्रूयतेऽत्रार्थे बहु वक्तव्यमस्ति कियल्लिख्यते इति प्रश्नत्रयप्रतिवचनानि ॥ १० ॥ ११ ॥ १२ ॥

प्रश्नः—कृत्रिमं वस्तु कियत्कालं तिष्ठति, संख्यातमसंख्यातं वा ? ॥ १३ ॥

उत्तरम्—कृत्रिमं वस्तु कियत्कालं तिष्ठति संख्यातमसंख्यातं वा, इत्यत्र कृत्रिममनेकप्रकारं तेनात्रार्थे भगवत्या अष्टमशतकनवमोद्देशकवृत्तिर्विलोक्या । किञ्चाऽत्रार्थेऽष्टापदाद्रिचैत्यमाश्रित्य यदि कश्चिद्विप्रतिपद्यते तदा तमाश्रित्य वसुदेवहिण्डी " तओ ते जण्हुपमिइया कुमारा पुरिसे आणवेइ गवेसह अट्ठावयतुल्लं पव्वयंति । ततो तेहिं तुल्लो पव्वओ न दिट्ठोत्ति निवेइयं । ततो अमच्चं ते लवंति–केवइयं पुणकालं आययणं अवसिज्जस्सइ ? ततो तेण

अमचेण भणियं—जाव इमाओ ओसप्पिणित्ति मे केवलिजिणाण अंतिए सुयं इति प्रतिवचः। तथा सिद्धान्ताक्षराणि कानीति ब्रुवाणस्य जम्बूद्वीपप्रज्ञप्त्यादौ सुषमासुषमारकादिवर्णके वापीदीर्घिकाकांस्यादिधातुप्रमुखकृत्रिमपदार्थसद्भावो दर्शनीय इति ॥ १३ ॥

प्रश्नः—कुहणाशब्देन भूमिस्फोटा व्याख्याताः सन्ति जीवाभिगमसूत्रे प्रत्येकवनस्पत्यधिकारे, जीवविचारे तु साधारणमध्ये भूमिस्फोटाः कथमुक्ता इति? ॥ १४ ॥

उत्तरम्—कुहणाशब्देन भूमिस्फोटा व्याख्यातास्सन्ति प्रत्येकवनस्पत्यधिकारे जीवाभिगमसूत्रे, जीवविचारे तु साधारणमध्ये भूमिस्फोटा उक्ताः सन्ति, अत्रार्थे तत्त्वं तत्त्वविद्वेद्यमिति बोध्यम् ॥ १४ ॥

प्रश्नः—विमानानामन्तराले भूमिरस्ति न वा? ॥ १५ ॥

उत्तरम्—विमानानामन्तराले भूमिरस्ति न वेत्यत्र सा नास्तीति विज्ञायते यतो भगवत्यादौ नरकसत्काः सप्त इषत्प्राग्भारा चेकेति अष्टैव पृथिव्य उक्ताः सन्ति यदि स्वर्गेऽपि साऽभविष्यत् तदाऽधिकापि उक्ताऽभविष्यदिति ॥ १५ ॥

प्रश्नः—दिव्वं तेयलेसं असहमाणेत्ति भगवतीषोडशशतकपञ्चमोद्देशकप्रान्ते। तद्वृत्तौ—इह किल शक्रः पूर्वभवे कार्तिकाभिधानोऽभिनवश्रेष्ठी बभूव, गङ्गदत्तस्तु जीर्णश्रेष्ठीति। एतौ मुनिसुव्रतजिनपार्श्वे प्रव्रजितौ। वृन्दारुवृत्तौ तु विशालायां श्रीमहावीरकायोत्सर्गाधिकारे जीर्णश्रेष्ठ्यभिनवश्रेष्ठिनाविति तौ कानिति? ॥ १६ ॥

उत्तरम्—दिव्वं तेयलेसं असहमाणे एतत्सूत्रवृत्तौ यौ जीर्णश्रेष्ठि–अभिनवश्रेष्ठिनौ श्रीमुनिसुव्रतस्वामिपार्श्वे प्रव्रजितौ तावन्यौ, वृन्दारुवृत्तौ तु विशालायां यौ जीर्णश्रेष्ठ्यभिनवश्रेष्ठिनौ प्रोक्तौ तौ भिन्नावेव ज्ञायते तेनात्र कः संशयः ? ॥१६॥

प्रश्नः—तस्स अयसिआओलंबंति तं च वेज्जे अदक्खुत्ति भगवतीषोडशशतकपञ्चमोद्देशके क्रियाधिकारेऽत्र वैद्यस्य का क्रिया किं जीवसत्कप्राणातिपातादिका किंवा कायकरणरूपेति ? ॥ १७ ॥

उत्तरम्—तस्स अयसिआ ओलंबंति तं च वेज्जे अदक्खुत्ति एतत्सूत्रे वैद्यस्य या क्रिया सा व्यापारजन्या न तु जीवघातजन्या अर्शसां जीवत्वप्रतिपादकाक्षराणामनुपलम्भादिति ॥ १७ ॥

प्रश्नः—भवियदव्वनेरइस्स णं भंते ! केवइयं कालं ठिई पन्नत्ता ? । गोयम ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीत्ति । तथा भवियदव्व असुरकुमारस्स णं भंते ! केवतियं कालं ठिई ? गोयम ! अंतोमुहुत्तं उक्कोसेणं तिन्नि पलिओवमाइत्ति । तत्कथं स जीवो जन्मभवनानन्तरमेवायुर्बध्नाति किंवान्यभवान्तरितः ? आयुर्बन्धे तु त्रिभागादि शास्त्रे प्रतिपादितं दृश्यते इति निर्णयः प्रसाद्य इति ॥ १८ ॥

उत्तरम्—भवियदव्वनेरइस्स णं भंते ! केवतिअं कालं ठिई पन्नत्ता ? गोयम ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीत्ति । अत्र एगभविए अवद्धाउए, अभिमुहिअनामगोए अ । एए तिन्निवि देसा दव्वंमि अ पुंडरीअस्स ॥ १ ॥ इति श्रीसूत्रकृताङ्गद्वितीयस्कन्धनिर्युक्तिवचनाद् योऽनन्तरे आगामिभवे नारको भावी स अबद्धायुरपि पूर्वभवे द्रव्यनारकोऽभिधीयते । तथा च पूर्वकोटिरुत्कर्षतः सुतरां संभवतीति न कश्चिच्छङ्कावकाशः । एवं " भवियदव्वं असुरकु-

मारस्स णं भंते ! केवतियं कालं ठिइ पन्नत्ता ? गोयम ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं तिन्नि पलिओवमाइं ”
इत्यत्रापि भावनीयम् ॥ १८ ॥

प्रश्नः—कुम्रनिंदेशे तैलादिनाऽङ्गुलीभिः कणिकापिण्डं प्रथयित्वा माया: क्रियन्ते ता आचाम्लप्रत्याख्याने यतीनां कल्पन्ते न वा ? ॥ १९ ॥

उत्तरम्—कुम्रनिंदेशे तैलादिम्रक्षितकरेण माया: क्रियन्ते ता आचाम्ले यतीनां कल्पन्ते इति ज्ञायते ॥ १९ ॥

## पुनः पण्डितकल्याणकुशलगणिकृतप्रश्नाः—

प्रश्नः—“ दुसु तिसु तिसु कप्पेसु, घणुदहिघणवायतदुभयं च कमा ” इत्यत्र घनोदधिघनवाततदुभयानां तद्वलयानां च विष्कम्भादि प्रमाणं कियदस्ति ? कुत्र च इति संदिहानोऽस्मि, तन्निर्णये तत्रत्यभूमेरपि विष्कम्भायामादिनिर्णयो भवति ॥१॥

उत्तरम्—“ दुसु तिसु तिसु कप्पेसु घणुदहिघणवायतदुभयं च कमा ” अत्र घनोदध्यादीनामष्टसु स्वर्गेषु विमानानामाधारतयाऽऽगमे प्रतिपादनं दृष्टमस्ति न तु तेषां परिमाणं वलयानि वाऽद्य यावत् दृष्टानि स्मृतिमायान्ति ॥ १ ॥

प्रश्नः—ओकेशवालानां केचिदेशनिह्नवत्वमास्थिपते तत्र चोपधानाऽपलापित्वं हेतुतयोपदर्शयन्ति । तदुपधानापलापित्वं किं तत्कृतग्रन्थेषु निषिद्धत्वेन ज्ञातं, सांप्रतीनानामवहनदर्शनेन, स्वधिया वा ? । तत्राऽन्त्यस्तूपेक्ष्य एव, द्वितीयोऽपि न चमत्कारकारकस्तेषां समुदाये प्रमादोत्पत्तेश्चिरकालीनत्वात्प्रमादेनाऽवहनं च न निह्नवतायां प्रयोजकम् , आद्ये

तु तान् ग्रन्थान् दिदृक्षुरस्मि यदि चैतेऽपि निह्नवास्तदा मूलशासनस्य श्राद्धाः के कुत्र वसन्तीत्यादितर्कविषयत्वेन प्रवचनपरीक्षागतमप्येतन्मच्चित्तेऽतीव चिन्त्यतया प्रतिभासते । केचित्तु प्रतिपदं पूत्कुर्वाणास्सन्ति यदेते निह्नवा इति । किञ्च, ' होइ मंगलम् " इतिपाठोऽपि न तेषां निह्नवतामावहति वज्रस्वामिनः प्रागेव तेषां शाखायाः पृथक् पतितत्वात्, नागपुरीयादितपापक्षीयानां पञ्चदशलोगस्सकायोत्सर्गोऽभाववत् । " काले विणए बहुमाणे " इत्यादिपाठोऽपि श्राद्धानामखण्ड एव तैः पाठितो दृश्यते ततो यदि ताता एककोटितां नीत्वा प्रसादयन्ति तदा शिशुरनुगृहीतो भवति ॥ २ ॥

उत्तरम्—ओकेशगच्छीयानां देशनिह्नवत्वं के पूत्कुर्वन्ति तन्न ज्ञायते । अस्माभिस्तु द्वादशजल्पपट्टे लिखितानामेव निह्नवत्वं श्रद्धीयते नान्येषां, द्वादशजल्पपट्टस्तु श्रीमतां प्राक् प्रहितोऽस्ति । किञ्च, प्रवचनपरीक्षासत्कमेतदाश्रित्यान्यच्च किञ्चिद्व्यपदिश्यतेऽन्यग्रन्थकारकैस्तद्विचार्यमेवास्ति । तथा नाम निर्णयज्ञापनं विना यथा तथा तन्निह्नवत्वादीनां प्रतीकारोऽपि कथं क्रियते इति ॥ २ ॥

प्रश्नः—" विमानवर्णनाधिकारे तेसु णं वइरामएसु अंकुसेसु चत्तारि कुंभिका मुत्तादामापन्नत्ता इत्यादिपाठो राजप्रश्नीयोपाङ्गस्थानाङ्गादिषु दृश्यते " इत्यत्र कुम्भप्रमाणानि मुक्ताफलान्युक्तानि कुम्भप्रमाणं चानेन क्रमेण–" दो असइओ पसई, दो पसइओ अ सेइआ होइ, चत्तारि सेइआओ, कुलओ, चत्तारि कुलयाओ पत्थो, चत्तारि पत्था आढयं, सट्ठिआढगाणं जहन्नए कुम्भे, असिई आढगाणं मज्झिमए कुम्भे, सयं आढयाणं उक्कोसए कुम्भे, अट्ठेव आढयसयाणि

याहे इति तन्दुलवैतालिकप्रकीर्णके। यद्येकस्यां प्रसृत्यां १ सेरः संमान्यते तदा सेतिकायां २ से०, कुडपे च १० से०, प्रस्थे च मणम्, आढके च ४ म०, आढकानां पष्ठ्या २४० मणप्रमाणो जघन्यः कुम्भो भवति। ४०० मणप्रमाण उत्कृष्टो भवति। अनया रीत्या विचार्यमाणं ६४ प्रमाणत्वं मौक्तिकानां कथं असंगतीभवति ?। अथैवमप्याधिक्यमेव समजनि नत्वऽभिप्रेतप्रमाणत्वमिति चेत् सत्यं, सूत्ररचनाया विचित्राभिप्रायत्वेन न जानीमः पृथक्त्ववत् किमपि कुम्भप्रमाणमपि विवक्षितं, कुडपप्रमाणस्य नैकधा श्रवणात्। तथाहि—हस्तोन्मितैर्विस्तृतिदैर्ध्य-पिण्डैर्यद्द्वादशास्रं घनहस्तसंज्ञम्। धान्यादिके यद् घनहस्तमानं, शास्त्रोदिता मागधखारिका सा ॥ १ ॥ द्रोणस्तु खार्याः खलु षोडशांशः, स्यादाढको द्रोणचतुर्थभागः। प्रस्थस्तथाढकचतुर्थभागः, प्रस्थांघ्रिभागः कुडपः प्रदिष्टः ॥ २ ॥ इति लीलावत्याम्। एतच्चात्यल्पमेव, साम्प्रतं तु नेपालदेशे ३६ पईसातुलितं कुडपं व्यवहरन्ति, तद्गणनायां च चतुष्षष्टिमणानि किञ्चिन्न्यूनानि भवन्ति। ततो ऐतिह्यमेव स्वीकार्यं सिद्धान्ते व्यक्तमानाऽनुपलम्भात्। अनुत्तरविमानगतस्य जीवस्य सङ्ख्यातभवोक्तौ २४ भवरूपैतिह्यवत्। किञ्चिद् व्यक्तमानाक्षराणि जीर्णपत्रेषु दृश्यन्ते, तद्यथा—" सर्वार्थसिद्धविमाने एवं मुक्ताफलं ६४ मणप्रमाणवलयाकारेण ४ मुक्ताफलानि ३२ मण प्रमाणानि, एवं तदर्धमानानि ८ वलयानि यदा वातलहर्या पृथग् भूत्वा मुख्यमुक्ताफले आस्फालयन्ति तदा तद्विमानं मधुरस्वरनादाऽद्वैतमयं जायते " इत्यादि। सिद्धप्राभृतप्रकीर्णकेऽप्येवमेव पण्डितपद्मविजयगणि-

---

१ अत्रेतिपाठः।

पार्श्वेऽपि। न चैतन्मानं न श्रद्धीयते, तादृशग्रन्थविच्छिन्नत्वात् सिद्धान्तानुगतस्यार्थस्याऽश्रद्धाने मिथ्यात्वापातात् । न चैतन्मानं सर्वार्थसिद्धे भविष्यति न नन्दीश्वरादाविति वाच्यम्, पाठस्यसमानत्वात् । पाठसाम्ये च न्यूनाधिकत्वं न दोषावहम्, "अड्ढइमाणराइंदिआणं" इतिपाठवत् । एवं सत्यपि कथञ्चित् तद्वादिनां निह्नवतां दूरकुर्वन्ति, कथं च ताताः प्रसादयन्तीति जिज्ञासायां ता एव प्रमाणमिति ॥ ३ ॥

उत्तरम्—सर्वार्थसिद्धादिविमाने मुक्ताफलमाश्रित्य वृद्धवादानुसारेण च्छूटकपत्रानुसारेण भुवनभानुकेवलिचरित्रानुसारेण च चतुःषष्टिमणप्रमाणत्वं श्रद्धीयते । किञ्च, कुम्भानां मानवैचित्र्यमुपलभ्यते नाऽत्रार्थे कदाग्रहमतिर्विधेयेति ॥ ३ ॥

पण्डितजिनदासगणिकृतप्रश्नाः—

प्रश्नः—नव नारदाः कुत्र कस्य वा पार्श्वे सम्यक्त्वं प्राप्ताः ? कियन्तश्च स्वर्गेऽपवर्गे च कियन्तो गता इति ? ॥ १ ॥

उत्तरम्—नारदगत्यादिकमाश्रित्य कश्चित् स्वर्गे कश्चिन्मोक्षे, परं सर्वेषां व्यक्तिः क्वचिदपि न दृश्यते इत्यवसेयम् ॥ १ ॥

प्रश्नः—जिनप्रतिमानां उष्णलाक्षादिरसेन चक्षुरादिसंयोजने आशातना भवति नवा ? ॥ २ ॥

उत्तरम्—जिनप्रतिमानां चक्षुरादिसंयोजनमाश्रित्य ये निपुणाः श्राद्धाः सन्ति ते सल्लतेले मेलयित्वा भूयो घर्षयित्वा तद्रसेन चक्षुरादि संयोजयन्ति, न तत्र उष्णलाक्षारसेन; तथा करणे आशातनादोषप्रसङ्गादिति ॥ २ ॥

प्रश्नः—आश्विनचैत्रमासाऽस्वाध्यायायिके सप्तम्यष्टमीनवमीदिनत्रयं उपधानमध्ये आयाति नवा ? ॥ ३ ॥

उत्तरम्—आश्विनचैत्रमासाद्यस्वाध्यायिकदिनत्रयमुपधानतपोविशेषेषु लेख्यके नायातीति बोध्यम् ॥ ३ ॥

प्रश्नः—मालापरिधापननन्दिः कदा मण्ड्यते ? ॥ ४ ॥

उत्तरम्—मालापरिधापननन्दिमाश्रित्य तन्नन्दिविधानं विजयदशमीदिनानन्तरं शुध्यतीति वृद्धवादः ॥ ४ ॥

प्रश्नः—भरतक्षेत्रे चक्री प्रथमं कं खण्डं साधयतीति क्रमः प्रसाद्य इति ॥ ५ ॥

उत्तरम्—" भरतक्षेत्रे चक्री प्रथमं कं खण्डं साधयति " इत्यत्र चक्री मध्यमखण्डं साधयित्वा सेनानीरत्नेन सिन्धुखण्डं साधयति । तदनु गुफाप्रवेशेन वैताढ्यमतिक्रम्य मध्यमखण्डं साधयति । तेनैव तत्रत्यं सिन्धुखण्डं साधयित्वा अत्राप्यागतो गङ्गाखण्डं तेनैव साधयित्वा राजधानीमभ्यागच्छतीति क्रमः ॥ ५ ॥

## पडितवेलर्षिगणिकृतप्रश्नाः—

प्रश्नः—पार्श्वस्थदीक्षिताद् साधोर्गणश्चलतीति कुत्रोक्तमस्ति ? ॥ १ ॥

उत्तरम्—अत्र संविग्न आचार्यादिः संविग्नगीतार्थाद्यभावेऽसंविग्नभक्तपार्श्वस्थादिपार्श्वे यदा प्रायश्चित्तमङ्गीकरोति तदा पुनर्व्रतारोपरूपं प्रायश्चित्तं कश्चित् प्रतिपद्यते, एवं छेदग्रन्थोक्तानुसारेण समाधानमवसेयम् ॥ १ ॥

प्रश्नः—देशपार्श्वस्थो वन्द्यः क्वास्ति ? ॥ २ ॥

१. राजधानी नागच्छतीति प्रत्यन्तरे । २. पार्श्वस्थदीक्षितान् साधोर्गणश्चलतीति कुत्रोक्तमस्ति. प्रत्यन्तरे. अधिकम् ।

उत्तरम्—अत्र पूर्वोक्ताक्षरानुसारेणाचार्यादिः प्रायश्चित्तं प्रतिपद्यमानो द्वादशावर्त्तवन्दनं पार्श्वस्थादेः करोति । कारणान्तरे तु सर्वपार्श्वस्थादेरपि वृद्धवन्दनादि करोतीति आवश्यकनिर्युक्त्यादौ कथितमस्ति ॥ २ ॥

प्रश्नः—नाणकपूजा गुरोः क्वास्ति ? ॥ ३ ॥

उत्तरम्—" अत्र कुमारपालेन राज्ञा श्रीहेमाचार्याणां पूजा सुवर्णकमलैः प्रत्यहं क्रियते स्म " इति कुमारपालप्रबन्धादौ प्रोक्तमस्ति तदनुसारेण नाणकपूजापि साम्प्रतं क्रियमाणा दृश्यते, तेषामपि धातुमयत्वात् । तथाऽत्र वृद्धवादोऽपि—" श्री सुमतिसाधुसूरीणां वारके मण्डपाचलदुर्गे मलिकश्रीमाफराभिधानेन सुवर्णटङ्कैः गीतार्थानां पूजा कृता " इति ॥ ३ ॥

## पुनः पण्डितविवेकहर्षगणिकृतप्रश्नाः—

प्रश्नः—" उसभेणं अरहा कोसलिए चउरासीई पुव्वसयसहस्साइं सव्वाउयं पालइत्ता सिद्धे बुद्धे जाव सव्वदुक्खप्पहीणे एवं भरहो बाहुबली बंभी सुंदरी " इतिसमवायाङ्गसूत्रावयवेन " उसहो उसहस्स सुआ " इत्यादिगाथाया विरोधापत्तिः संजायते, यतो वृषभदेवस्य षड्लक्षपूर्वातिक्रमे संजातस्य चतुरशीतिलक्षपूर्वायुषोऽपि बाहुबलेर्भगवता सार्धं निर्वाणमुक्तमिति । न चैतस्य विरोधस्याश्चर्ये एव पात इति वाच्यम्, आश्चर्ये हि

१ देशपार्श्वस्थो वंद्यः कास्तीति. प्रत्यन्तरे. २ नाणकपूजा गुरोः कास्तीति. प्रत्यन्तरे अधिकम् ।

उत्कृष्टावगाहनापन्नानामष्टोत्तरशतसंख्यानामेकसमयावच्छेदेन सिद्धिरेवेति ॥ १ ॥

उत्तरम्—बाहुबलेः समवायाङ्गानुसारेण चतुरशीतिलक्षपूर्वायुष्कतासद्भावेऽपि ग्रन्थान्तरे यद् वृषभस्वामिना समं निर्वाणमुक्तमस्ति तन्न विरुद्धं यत एतस्यायुषोऽपवर्तनस्यापि " अट्ठसयसिद्धा " इत्यस्मिन्नेवाश्चर्येऽन्तर्भावात् । न चायमन्तर्भावोऽनुपपन्न इति वाच्यम्, " हरिवंसकुलुप्पत्ति " इत्यस्मिन्नप्याश्चर्ये युगलिन आयुषोऽपवर्तनं नरकगमनं चान्तर्भवतीति ॥ १ ॥

प्रश्नः—" अंतोमुहुत्तमित्तं पि " इतिगाथायां सम्यग्दृष्टेर्न्यूनार्धपुद्गलपरावर्तः संसार उत्कर्षतः प्रतिपादितोऽस्ति, " जो अ किरिआवाई सो भविओ अभविओ वा " इत्यादिदशाचूर्ण्यक्षरानुसारेण तु सम्यग्दृष्टेः क्रियावादिनो मिथ्यादृष्टेश्चोत्कर्षतो न्यूनपुद्गलपरावर्त्तः संसारः, परं सोऽप्यागमान्तरानुसारेण न्यूनार्धपुद्गलरूपोऽवसीयते, अत्र सम्यग्दृष्टेः क्रियावादिमिथ्यादृष्टेश्च कथं संसारसाम्यम् ? ॥ २ ॥

उत्तरम्—अत्र यद्यपि आपातमात्रेण साम्यमुक्तमस्ति तथापि सम्यग्दृष्टेः कस्यचिद् आशातनाबहुलस्य विराधकस्यैवैतावान् संसारो भवति नाऽन्यस्य । क्रियावादिमिथ्यादृष्टिसमुदाये तु कस्यचिल्लघुकर्मण एकावतारित्वसम्भव इति कथं साम्यशङ्केति प्रतिभाति । तत्त्वं तु तद्विद् वेत्तीति ॥ २ ॥

प्रश्नः—कस्यचिज्जानतोऽभिनिविष्टस्य संसारवृद्धिहेतुः कर्मबन्धो भूयान् उताभिनिविष्टस्य तन्मार्गानुयायिनो वाऽजानतः?॥३॥

उत्तरम्—व्यवहारेण जानतः कर्मबन्धो भूयानित्यवसीयते ॥ ३ ॥

प्रश्नः—कश्चिदजानन् हिंसादिना कर्म चिनोति कश्चित्तु जानन्, इत्यनयोः कस्य कर्मबन्धदार्ढ्यम् ? ॥ ४ ॥

उत्तरम्—उभयोरपि क्रोधादिपरिणामस्य दृढत्वे कर्मबन्धस्य दार्ढ्यं, मन्दत्वे तु मन्दत्वं भवति ॥ ४ ॥

## पुनर्महोपाध्यायश्रीसुमतिविजयगणिशिष्यपण्डित–गुणविजयगणिकृतप्रश्नाः—

प्रश्नः—दक्षिणभरतार्धे श्रीऋषभ इव उत्तरभरतार्धे कोऽपि सकलव्यवहारकर्ता समस्ति न वा ?। आद्ये स नामग्राहं प्रसाद्यः अन्त्ये च कथं तत्र तद्व्यवहारप्रवृत्तिरिति ? ॥ १ ॥

उत्तरम्—दक्षिणभरतार्धे यथाऽऽद्यो नीतिप्रणेता ऋषभदेवस्तथोत्तरभरतार्धेऽपि कश्चिदस्ति न वेति ?। अत्रोत्तरभरतार्धेऽपि जातिस्मरणादिभाक् क्षेत्राधिष्ठायकदेवो वा कश्चित्तत्र नीतिप्रणेता, कालानुभावात् स्वतोऽपि वा क्रियानैपुण्यं जायते इति ॥ १ ॥

प्रश्नः—सौधर्मादिषु प्रतिदेवमुपपातशय्याभेदोऽथवा एकस्यामेवाऽनेकेषामुपपातः ? ॥ २ ॥

उत्तरम्—अत्र महर्धिकसुराणामुपपातशय्या भिन्ना, अन्येषां तु अभिन्नापि संभाव्यते तथाविधव्यक्ताक्षराणां दर्शनेस्यास्मरणादिति ॥ २ ॥

प्रश्नः—देशावकाशिकव्रते केनचिद् योजनशतं रक्षितं, किञ्चित्कार्यमापतितं; तदूर्ध्वं लेखप्रेषणेन व्रतमालिन्यं न वा ? ॥ ३ ॥

उत्तरम्—देशावकाशिकव्रते केनचिद् योजनशतं रक्षितं, किञ्चित्कार्यमापतितं; तदूर्ध्वं लेखप्रेषणेन व्रतमालिन्यं भवतीति

ज्ञायते, योगशास्त्रवृत्त्यादौ तथैव दर्शनादिति ॥ ३ ॥

प्रश्नः—उपधानवाहिनः श्राद्धादेरकालसंज्ञायां जलशौचादिविधिः किं निश्यपि स्यान्नवा ? ॥ ४ ॥

उत्तरम्—स्वकीयादिनाऽऽनीतेनोष्णोदकेन शौचादिविधानं युक्तिमदिति ॥ ४ ॥

प्रश्नः—ऋषभस्वामी अष्टाग्रशतेनैकस्मिन्नेव समये सिद्धः, इदं चाश्चर्यम्; तत्र बाहुबल्याद्यायुराश्रित्य का गतिः ? इदं च तत्प्रतिपादकग्रन्थनामप्रसादनपूर्वं निर्णयकारि प्रसाद्यमिति ॥ ५ ॥

उत्तरम्—" अट्ठसयसिद्धा " अस्मिन्नेवाश्चर्ये बाहुबलेरायुषोऽपवर्तनमन्तर्भवति, यथा " हरिवंसकुलुप्पत्ति " इत्याश्चर्ये हरिवर्षक्षेत्रानीतस्य युगलस्यायुरपवर्तनं, शरीरलघुकरणं, नरकगमनादि चाऽन्तर्भवतीति ॥ ५ ॥

प्रश्नः—येऽष्टौ आत्मप्रदेशा मध्यस्था एव सन्ति तेऽपि किं कर्मपरमाणुवर्गणाभिर्लिप्ताः सन्ति तदनालिङ्गिता वा ? ॥ ६ ॥

उत्तरम्—कर्मणाऽनावृता अष्टौ प्रदेशा इति विज्ञायते । स्पृश्यन्ते कर्मणा तेऽपि, प्रदेशा आत्मनो यदि । तदा जीवो जगत्यस्मिन्नजीवत्वमवाप्नुयात् ॥ १ ॥ इति ज्ञानदीपिकायामुक्तत्वात् ॥ ६ ॥

प्रश्नः—मेघकुमारस्य पाश्चात्यभवे हस्तिरूपस्य यन्नाम दृश्यते तत् केन दत्तम् ? ॥ ७ ॥

उत्तरम्—तत्पर्वतनितम्बादिनिवासिवनेचरैस्तन्नाम दत्तमिति श्रीज्ञाताधर्मकथाङ्गे उक्तमस्तीति बोध्यम् ॥ ७ ॥

प्रश्नः—चतुर्दशगुणस्थानकेषु समारोहन् जन्तुः किं क्रमेण एकादिव्यवधानेन वा चतुर्दशं गुणस्थानं स्पृशतीति ? ॥ ८ ॥

१. एवेति. प्रत्यन्तरे ।

उत्तरम्—अत्र अनादिमिथ्यादृष्टिस्तावच्चतुर्थं गुणस्थानकं याति नतु द्वितीयतृतीये, तदनु यद्युपशमश्रेणिमारभते तदैकादशं यावत् क्रमेण याति; यदि च क्षपकस्तदैकादशं विहाय चतुर्दशं यावत् क्रमेणेति विज्ञायते । विशेषस्तु विशेषावबोधकशास्त्रगम्य इति ॥ ८ ॥

प्रश्नः—औपपातिकसूत्रे साधुवर्णनाधिकारे 'पंताहारे' इत्यस्य वृत्तौ पर्युषितं वल्लचणकादीति व्याख्यातमस्ति, तथा च पर्युषितपूपिकाभक्षणादराणां खाद्यादीनां तद्विषये दोषोद्घटनं कथं युक्तिमदिति ? ॥ ९ ॥

उत्तरम्—" निप्फावचणकमाई अंतं पंतं च होइ वावन्नं " इति बृहत्कल्पभाष्ये जिनकल्पिकाधिकारे । एतद्वृत्तौ च व्यापन्नशब्देन विनष्टमिति व्याख्यातमस्ति । तत्त्वं तु तत्त्वविद्वेद्यम् । आत्मनां पर्युषितस्याऽग्रहणोऽविच्छिन्नवृद्धपरम्पराऽऽसाधनं संसक्तिसद्भावे तद्दोषवर्जनं च गुणायैवेति बोध्यम् ॥ ९ ॥

प्रश्नः—उपाङ्गानि किं गणधरविरचितानि अन्यथा वा ? तथा अङ्गप्रणयनकालेऽन्यदा वा तन्निर्माणमिति ? ॥ १० ॥

उत्तरम्—उपाङ्गानि स्थविराः कुर्वन्तीति । तीर्थङ्करे विद्यमानेऽविद्यमानेऽपीत्यङ्गप्रणयनकाले एव तेषां निर्माणमिति नैकान्त इति नन्दीसूत्रवृत्तौ व्यक्तोक्तमस्ति तेन विशेषतस्ततोऽवसेयमिति ॥ १० ॥

## गणिजयवन्तशिष्यपण्डित—देवविजयगणिकृतप्रश्नाः

प्रश्नः—लोकान्तिकदेवा एकावतारिणोऽष्टावतारिणो वा ? ॥ १ ॥

उत्तरम्—अष्टावतारिण इति ज्ञातमस्ति ॥ १ ॥

प्रश्नः—सङ्गमकसुरः सुरेशेन निष्काशितः स भवधारणीयेन शरीरेण मेरुचूलायां जगामोत्तरवैक्रियेण वा ? ॥ २ ॥

उत्तरम्—अत्र मौलेनेति विज्ञायते उत्तरवैक्रियस्यैतावत्कालमवस्थानाऽभावात् । यत्तु मौलं शरीरं विमानाद् बहिर्न निर्गच्छतीति वचस्तत् प्रायिकमिति बोध्यम् ॥ २ ॥

प्रश्नः—कृतसर्वविकृतिप्रत्याख्यानस्य श्राद्धस्य निर्विकृतप्रत्याख्याने एकाशनकवद् द्व्यासनकमपि कल्पते न वा ? ॥ ३ ॥

उत्तरम्—कल्पते इति ज्ञातव्यम् ॥ ३ ॥

प्रश्नः—परमाधार्मिका भव्या एव इति प्रघोषो मिथ्यारूपोऽमिथ्यारूपः ? ॥ ४ ॥

उत्तरम्—परमाधार्मिका भव्या एव इति प्रघोषः सत्योऽसत्यो वेत्यत्र असत्य[1] एवेति ज्ञेयम्, उभयथापि तेषामविरोधात् । न च जन्मान्तरीयकृतदुष्कृतोक्तिपूर्वकं ते नारकान् कदर्थयन्तीति अभव्यानां तत् कथं संगच्छते इति वाच्यम्, यतस्तेऽपि स्वर्गकामास्तपस्यां कुर्वाणा आगमे श्रूयन्ते इति ॥ ४ ॥

---

१ सत्योऽसत्यो वेतीति पाठः ।

२ जइ अभवियजीवेहिं न फासिया एवमाइया भावा । इंदत्तमनुत्तरसुर-सिलायपुरिसनरनारयत्तं च ॥ २९० ॥
केवलिगणहरहत्थे पव्वजा तित्थवच्छरं दाणं । पवयणसुरीसुरत्तं लोगंतियदेव सामित्तं ॥ २९१ ॥
तायत्तीससुरत्तं परमाहाम्मियजुयलमणुयत्तं । संभिन्नसोयतहपुव्व-धराहारयपुलयत्तं ॥ २९२ ॥
........ इत्यादि सम्बोध प्रकरणस्य गाथानुसारेण परमाधार्मिकाणाम् भव्यत्वमेवावसीयते.

प्रश्नः—श्रीवीरेण चक्रित्वप्राप्तिपुण्यं क भवेऽर्जितम् ? ॥ ५ ॥

उत्तरम्—अत्र निर्णयो ग्रन्थे दृष्टो नास्ति ॥ ५ ॥

प्रश्नः—तीर्थंकरजीवानां नरके परमाधार्मिककृता पीडा भवति न वा ? ॥ ६ ॥

उत्तरम्—अत्राप्येकान्तेन ज्ञातं नास्ति ॥ ६ ॥

प्रश्नः—देशविरतो चक्रिपदबन्धो भवति न वा ? ॥ ७ ॥

उत्तरम्—अत्राप्येकान्तो ज्ञातो नास्ति ॥ ७ ॥

प्रश्नः—कृष्णस्य भवपञ्चकं नेमिचरित्रे, क्षायिकसम्यक्त्ववतां चोत्कर्षतो भवचतुष्टयमेवोक्तमस्तीति कथं सङ्गतिः ? ॥ ८ ॥

उत्तरम्—कृष्णस्य भवपञ्चकमाश्रित्य मतान्तरमवसीयते, यतो धर्मोपदेशमालावृत्तौ श्रीनेमिना श्रीकृष्णस्य विषादकरण प्रस्तावे कथितम् । यथा—" मा सोय तुमं तओ उवट्टित्ता इहेव भारहे वासे सयदुवारे नयरे जियसत्तुस्स पुत्तो दुवालसमो अममो नाम तित्थयरो होहिसि " एतदक्षरानुसारेण भवत्रयमेवायाति । तत्त्वं पुनः केवलिनो विदन्तीति ॥ ८ ॥

प्रश्नः—श्रीमल्लिजिनस्य श्रीज्ञाताधर्मकथाङ्गे दीक्षादिने केवलज्ञानोत्पत्तिः, आवश्यकनिर्युक्तौ तु अहोरात्रः छाद्मस्थ्यकालः कथितोऽस्ति तत्कथं घटते ? ॥ ९ ॥

---

१ नगरे प्रत्यन्तरे । २. अममा प्रत्यन्तरे । अममो. प्रत्यन्तरे । ३. सयादुवाल समोअमस जिने भावीति वर्णाः समवायांगा-दौ दृश्यते इति प्रतांतरे ।

उत्तरम्—अत्र ज्ञाताधर्मकथाङ्गवृत्त्येकदेशो यथा–" यत्र दिवसे दीक्षां जग्राह तस्यैव पौषमासशुद्धैकादशीलक्षणस्य प्रत्यपराह्णकालसमये पश्चिमे भागे " इदमेवावश्यके पूर्वाह्णे मार्गशीर्षे च श्रूयते। यदाह–तेवीसाएणाणं उप्पण्णं जिणवराण पुव्वण्हेत्ति। तथा मग्गसिरसुद्धएगारसीए मल्लिस्स अस्संणी जोगत्ति। तत्रैवास्याहोरात्रं यावच्छाद्मस्थ्यपर्यायः श्रूयते। तदप्यभिप्रायं बहुश्रुता विदन्ति ॥ ९ ॥

प्रश्नः—पौषधवत्यो नार्योऽध्वनि देवगुरुगुणगानं कुर्वन्तीति क्वास्ति ? ॥ १० ॥

उत्तरम्—नेयं शास्त्रोक्ता रीतिरिति बोध्यम् ॥ १० ॥

प्रश्नः—रात्रौ पौरुष्याः पश्चाद् गाढस्वरेण न वक्तव्यमिति वृद्धवचः श्रुत्वापि श्राद्धा रात्रिजागरं कुर्वन्ति तद् क्वास्ति ? ॥ १० ॥

उत्तरम्—अत्र तपस्यादिमहे तत्करणस्य दृश्यमानत्वात् परम्परैव शरणमवसीयते इति ॥ ११ ॥

## पण्डितवेलार्षिगणिकृतप्रश्नाः—

प्रश्नः—नवक्षणैः कल्पसूत्रं वाच्यते, कैश्चिदधिकैरपि वाच्यते, तदक्षराणि क्व सन्तीति ? ॥ १ ॥

उत्तरम्—नवक्षणैः कल्पसूत्रं वाच्यते परम्परातः, अन्तर्वाच्यमध्ये नवक्षणविधानाक्षरसद्भावाच्च। अधिकव्याख्यानैस्तद्वाचनं तु तथाविधसुविहितगच्छपरम्परानुसारि अक्षरानुसारि च नाऽवसीयते ॥ १ ॥

१. अस्सिणी, इति प्रत्यन्तरे।

प्रश्नः—राजगृहे नगरे गुणशीलाख्ये चैत्ये श्रीमहावीरेण कल्पसूत्रं प्रकाशितमिति कल्पाध्ययने उक्तमस्ति, कल्पसूत्रवृत्त्यादौ श्रीभद्रबाहुस्वामिभिः प्रणीतमिति कथं सङ्गच्छते ? ॥ २ ॥

उत्तरम्—अत्र श्रीमहावीरेण कल्पसूत्रमर्थतः प्रकाशितं मद्द गणधरैः सूत्रतो निबद्धम्, तदनु श्रीभद्रबाहुस्वामिभिर्नवमपूर्वाद् दशाश्रुतस्कन्धपुद्धरद्भिस्तदष्टमाध्ययनरूपत्वेन श्रीकल्पसूत्रमपि उद्धृतमिति न किञ्चिदनुपपन्नमिति ॥ २ ॥

प्रश्नः—श्रीआदिनाथस्य वारके तालफलेन युगलिकदारको [1]मृतो युगलिनां चाऽकालमरणं न भवतीति कथं घटते ? ॥३॥

उत्तरम्—पूर्वकोट्यधिकायुषो युगलिनो न्यूनायुषि न म्रियन्ते । ततः श्रीआदिनाथस्य वारके तालफलेन मृतस्य युगलिनः पूर्वकोट्यधिकमायुर्नाभूदिति सङ्गच्छते इति ॥ ३ ॥

प्रश्नः—श्रीशत्रुञ्जयस्योपरि पञ्चपाण्डवैः समं साधूनां विंशतिकोट्यः सिद्धा इति श्रीशत्रुञ्जयमाहात्म्यादौ प्रोक्तमस्ति । सा कोटिः विंशतिरूपा शतलक्षरूपा वेति ? ॥ ४ ॥

उत्तरम्—अत्र शतलक्षरूपा कोटिरवसीयते न तु विंशतिरूपेति बोध्यम् ॥ ४ ॥

प्रश्नः—ज्ञाताधर्मकथाङ्गनवमाऽध्ययने रत्नद्वीपदेवी मौलेन शरीरेण लवणसमुद्रं शोधनार्थं गतेत्युक्तमस्ति, परं मौलशरीरेणान्यत्र गमनं कथं सङ्गच्छते ? ॥ ५ ॥

१ तु इति. प्र.

उत्तरम्—अत्र ज्ञातामध्ये रत्नद्वीपदेवी मौलशरीरेण[1] समुद्रशोधनार्थं गताऽस्ति, परं तस्या मौलशरीरेणान्यत्र गमनप्रतिषेधो ज्ञातो नास्तीति ॥ ५ ॥

प्रश्नः—तीर्थकृतामन्तरेषु साध्वादीनां विच्छेदे सति यदि कस्यचित् स्वयंबुद्धादेः केवलज्ञानमुत्पद्यते तदा स धर्मोपदेशं दत्ते न वा? ॥ ६ ॥

उत्तरम्—अत्र प्रत्येकबुद्धादयः सर्वथोपदेशं न ददतीति निषेधः सिद्धान्ते दृष्टो नास्तीति[2] बोध्यम् ॥ ६ ॥

प्रश्नः—भरतक्षेत्रसत्कषट्खण्डनामानि प्रसाद्यानीति ॥ ७ ॥

उत्तरम्—अत्र भरतस्य दक्षिणार्द्धे गङ्गासिन्धुनद्योरन्तरवर्तिनो देशस्य म[3]ध्यखण्डमित्यभिधानम् १ । गङ्गातः पूर्वदिग्वर्तिनो देशस्य गङ्गानिष्कुटखण्डमित्यभिधानम् २ । सिन्धुनदीतः पश्चिमदिग्वर्तिनो देशस्य सिन्धुनिष्कुटखण्डमित्यभिधानम् ३ । एवम् उत्तरार्धे चैतान्येव त्रीणि नामानि ज्ञातव्यानि ॥ ७ ॥

प्रश्नः—"जइआ होई पुच्छा, जिणाण मग्गम्मि उत्तरं तइआ । इक्कस्स निगोअस्स य, अणंतभागो उ सिद्धिगओ" ॥१॥ एतद्गाथार्थो युक्तिग्राह्य आज्ञाग्राह्यो वा? ॥ ८ ॥

उत्तरम्—"जइआ होई पुच्छा" एतद्गाथाया अर्थो मुख्यवृत्त्या आज्ञाग्राह्यो वर्तते । युक्तिरपि तत्रेदृशी वर्तते । तथाहि—यद्यनादिकालसिद्धा एकनिगोदस्यनन्तमे भागे कथितास्तदा पुनरनन्तकाले गते एकनिगोदाऽनन्ततमभागत्वं

१ लवणेति. प्र. । २ अन्यत्र नास्ति. प्र. । ३ मध्यम. प्र. ।

सिद्धजीवानां कथं टलति ? । तथा 'दृष्टान्तोऽप्यस्ति यथा—जम्बूद्वीपादिमता लक्षशो नद्यः प्रतिवर्षं कचवरादि 'प्रवाह' समुद्रमध्ये लात्वा यान्ति तथापि समुद्रमध्ये स्थली न भवति जम्बूद्वीपादिमध्ये गर्ता वा 'न' भवति,' इति दृष्टान्तेन सिद्धिक्षेत्रं जीवैर्न भ्रियते संसारो वा जीवै रिक्तो न क्रियते इति ॥ ८ ॥

प्रश्नः—श्रीमहावीरस्य द्वासप्ततिवर्षप्रमाणमायुरुक्तमस्ति तत्र जन्म चैत्रत्रयोदश्यां निर्वाणं तु कार्तिकाऽमावास्यामेतत् कथं मङ्गच्छते ? ॥ ९ ॥

उत्तरम्—अत्राऽऽपाढसितषष्ठीलक्षणगर्भोत्पत्तिदिनादारभ्य गणने द्वासप्ततिरेव वर्षाणि जायन्ते । किंवन्यूनाधिकमासादिगणनाल्पत्वेन वर्षचूलातया विवक्षणात्र कृतेति संभाव्यते । निर्णयस्तु व्यक्त्या ग्रन्थाक्षरदर्शनं विना कथं भवतीति ? ॥ ९ ॥

प्रश्नः—श्रीमहावीरस्य मातापितरौ द्वादशे तुर्ये वा देवलोके गताविति ? ॥ १० ॥

उत्तरम्—अत्र श्रीवीरस्य मातापितरौ आचाराङ्गमध्ये द्वादशदेवलोके, प्रवचनसारोद्धारे च तुर्ये गतौ प्रतिपादितौ; तन्निर्णयस्तु केवलिगम्य इति ॥ १० ॥

प्रश्नः—हरिनैगमेषिणा श्रीमहावीरस्य गर्भापहारः केन द्वारेण कृतस्त्रिशलाकुक्षौ च केन द्वारेण मोचनं कृतम् ? ॥ ११ ॥

उत्तरम्—अत्र हरिनैगमेषो देवानन्दायोनिद्वारेण कर्षयित्वा त्रिशलागर्भाशये छविच्छेदं विधाय मुक्तवान्, योनिद्वारेणेत्यक्षराणि श्रीभगवतीसूत्रमध्ये सन्तीति ॥ ११ ॥

प्रश्नः—स्थूलभद्रस्य भ्राता श्रीयको मृत्वा क्व गतः ? ॥ १२ ॥

उत्तरम्—अत्र श्रीयकः परिशिष्टपर्वणि सामान्यतो देवलोके गतोऽभिहितोऽस्तीति ॥ १२ ॥

प्रश्नः—साध्वी श्राद्धानामग्रे व्याख्यानं न करोतीत्यक्षराणि[1] कुत्र ग्रन्थे सन्तीति ॥ १३ ॥

उत्तरम्—अत्र दशवैकालिकवृत्तिप्रमुखग्रन्थमध्ये यती केवलश्राद्धीसभाऽग्रे व्याख्यानं न करोति रागहेतुत्वादित्युक्तमस्ति । एतदनुसारेण साध्व्यपि केवलश्राद्धसभाऽग्रे व्याख्यानं न करोति रागहेतुत्वादिति ज्ञायते ॥ १३ ॥

प्रश्नः—द्वीन्द्रियेलिका स्फिटित्वा चतुरिन्द्रियभ्रमरी कथं भवति ? ॥ १४ ॥

उत्तरम्—अत्र इलिकाकलेवरमध्ये इलिकाजीवोऽपरो वा भ्रमरीत्वेनाऽऽगत्योत्पद्यते इति ॥ १४ ॥

प्रश्नः—केवलोर्णिकाशरीरसंपर्के संमूर्च्छजजीवानामुत्पत्तिरस्ति न वा ? ॥ १५ ॥

उत्तरम्—अत्र केवलोर्णिकाशरीरसंपर्के वस्त्रापेक्षया षट्पद्यो बह्व्य उत्पद्यन्ते इत्यक्षराणि च्छेदग्रन्थे स्मरन्ति नेतराणीति ॥ १५ ॥

प्रश्नः—महाविदेहे श्रीसीमन्धरस्वामिस्थाने यस्तीर्थकर उत्पत्स्यते तस्य किं नाम ? तथा तत्र वस्त्रवर्णादिविधिः कथम् ? । तथा विहरमाणविंशतितीर्थकृतां मातापितृग्रामादिनामानि कुत्र शास्त्रे सन्ति ? ॥ १६ ॥

उत्तरम्—अत्र महाविदेहे श्रीसीमन्धरस्वामिस्थाने उत्पत्स्यमानतीर्थङ्करनाम शास्त्रे दृष्टं नास्ति । तथा तत्र वस्त्रवर्णादिविधिरिहत्याऽजितादिद्वाविंशतितीर्थकृतामनुसारेणेति । तथा विहरमाणविंशतितीर्थकृतां मातापितृग्रामादिनामानि

---

१ उर्णिकाद्वीन्द्रिया. प्र.

चतुर्[1]टंकपत्रादौ कथितानि सन्तीति ॥ १६ ॥

प्रश्नः—अष्टापदपर्वते प्रतिमाप्रतिष्ठा केन कृता ? कुत्र सा कथिताऽस्तीति ? ॥ १७ ॥

उत्तरम्—अत्र अष्टापदपर्वते प्रतिमाप्रतिष्ठा श्रीऋषभदेवशिष्येण कृतेति श्रीशत्रुञ्जयमाहात्म्यमध्ये कथितमस्तीति ॥ १७ ॥

प्रश्नः—द्रौपद्या नवनिदानमध्ये किं नामकं निदानं कृतम् ? ॥ १८ ॥

उत्तरम्—अत्र श्रीज्ञाताधर्मोक्तद्रौपदीसम्बन्धानुसारेण चतुर्थनिदानसंभवो ज्ञायते, परमध्यवसायविशेषेण तस्य निदानताया अभावाद् द्रौपद्या चारित्रं प्राप्तमिति संभाव्यते । ग्रन्थमध्ये तु दृष्टं नास्ति यदनयाऽमुकं निदानं कृतमिति ॥१८॥

प्रश्नः—शाश्वतो मेरुः श्रीमहावीरेण कथं चालितः ? कुत्र वा कथितोऽस्ति ? ॥ १९ ॥

उत्तरम्—अत्र यथा शाश्वत्या रत्नप्रभाया देवानुभावेन स्वभावेन वा प्रकम्पो जायते तथा श्रीवीरचरणाङ्गुष्ठबलानुभावेन शाश्वतमेरोरपि प्रकम्पो बोध्य इति । एतदक्षराणि श्रीवीरचरित्रप्रमुखग्रन्थमध्ये सन्तीति ॥ १९ ॥

प्रश्न—पञ्चदशशततापसानां गौतमस्वामिना परमान्नेन पारणा कारिता । तत्र लब्धिपरमान्नम् अदत्तमिति साधूनां कथं कल्पते ? ॥ २० ॥

उत्तरम्—अत्र एकोऽपि परमान्नपतद्ग्रहोऽक्षीणमहानसलब्धिप्रभावेणैव सर्वेषां प्राप्त इत्यत्राऽदत्तं किमपि ज्ञातं नास्तीति बोध्यम् ॥ २० ॥

१ च्छूटिट. प्र. २ अमुक. प्र.

## पण्डितकीर्तिहर्षगणिकृतप्रश्नाः—

प्रश्नः—प्रातः कृतद्विविधाहारैकाशनस्य श्राद्धस्य निशि द्विविधाहारप्रत्याख्यानं शुध्यति न वा ? ॥ १ ॥

उत्तरम्—शुध्यतीति बोध्यम् ॥ १ ॥

प्रश्नः—संसारे वसन्नेकजीव इन्द्रत्वं चक्रित्वं वासुदेवत्वं च कति वाराँल्लभते ? ॥ २ ॥

उत्तरम्—अत्र इन्द्रत्वादिलब्धेः संख्या क्वाप्यागमे दृष्टा न स्मरतीति ॥ २ ॥

प्रश्नः—संप्रति ये इन्द्राः सन्ति ते सर्वेऽपि एकावतारिणो न वा ? ॥ ३ ॥

उत्तरम्—संप्रति ये इन्द्राः सन्ति तेषां मध्ये केचनैकावतारिणो न तु सर्वे इति ॥ ३ ॥

प्रश्नः—नारदाः सर्वे तद्भव एव मुक्तिगामिनो भवान्तरे वा ? ॥ ४ ॥

उत्तरम्—नारदाः केचन तद्भवे मोक्षगामिनः केचन भवान्तरेऽपीति ज्ञेयम् ॥ ४ ॥

## पण्डितनगर्षिशिष्यगणि—सूरविजयकृतप्रश्नाः

प्रश्नः—पाक्षिकादिषु ये चतुर्थादि तपो न कुर्वन्ति तेषां किं प्रायश्चित्तं उताऽनन्तसंसारित्वं भवति ? ॥ १ ॥

उत्तरम्—अत्र पाक्षिकादिषु चतुर्थादि तपः कारणाऽभावे न कुर्वन्ति तेषां प्रायश्चित्तं भवति, परमनन्तसंसारित्वं न भवति ॥१॥

१ ज्ञेयमिति. प्र. २ नागर्षि. प्र. ।

प्रश्नः—रावणहारः[1] परिपाट्याऽऽगतो, बालत्वे तस्य देवेन समर्पितो वा ? ॥ २ ॥

उत्तरम्—अत्र रावणस्य हारः परिपाट्याऽऽगतोऽस्तीति ॥ २ ॥

प्रश्नः—येन प्रव्रज्यायाः पूर्वं लघुधान्यानि प्रत्याख्यातानि भवन्ति तस्य तद्ग्रहणे तानि कल्पन्ते न वा ? ॥ ३ ॥

उत्तरम्—अत्र पूर्वं येन लघुधान्यानि प्रत्याख्यातानि तस्य प्रव्रज्याग्रहणे सति अन्याऽऽज्ञाऽप्राप्तौ तानि कल्पन्ते इति ॥ ३ ॥

प्रश्नः—"नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः" इति पूर्वगतं किंवा न ? तथा पूर्वाणि संस्कृतानि प्राकृतानि वा ? ॥ ४ ॥

उत्तरम्—अत्र नमोऽर्हत्सिद्धाचार्येत्यादि पूर्वगतं ज्ञेयम्, तथा पूर्वाणि सर्वाणि संस्कृतानि वेदितव्यानि ॥ ४ ॥

प्रश्नः—वीरशासने कति प्रत्येकबुद्धा अन्येषां च कियन्तः ? ॥ ५ ॥

उत्तरम्—अत्र वीरशासने चतुर्दशसहस्रप्रमाणाः प्रत्येकबुद्धाः। एवं ऋषभादीनां यावन्तो यतयस्तावन्तः प्रत्येकबुद्धा इति ॥५॥

प्रश्नः—पण्डितादिपदस्थानामग्रे देववन्दनं कल्पते न वा ? ॥ ६ ॥

उत्तरम्—अत्र प्रतिमानां स्थापनाचार्याणां वाऽग्रे देववन्दनं कल्पते नान्यथेति ॥ ६ ॥

प्रश्नः—त्रिफलाकृतं पानीयं प्रासुकं कुत्र सिद्धान्ते प्रोक्तमस्ति ? ॥ ७ ॥

उत्तरम्—अत्र त्रिफलाकृतं प्रासुकं जलं सिद्धान्ताऽनुमतम् । यतः–तुंबरे फले य पत्ते, रुक्खसिलाउप्पमद्दणादीसु । पासंदणे

[1] रावणस्य हारः. प्र.

पवाते, आयवतते चहे अवहे ॥ २०४ ॥ इयं निशीथभाष्यगाथा । एतच्चूर्णौ " तुंबरफला हरितक्यादयः " इति व्याख्यातमस्तीति ॥ ७ ॥

प्रश्न—एकविंशतिपानीयानां प्रासुकीभवनानन्तरं पुनः कियता कालेन सचित्तता भवति ? तथा तेषां सर्वेषां सांप्रतं प्रवृत्तिः कथं नास्ति ? ॥ ८ ॥

उत्तरम्—अत्र उष्णोदकस्य यथा वर्षादौ प्रहरत्रयादिकः कालः प्रोक्तोऽस्ति तथा प्रासुकोदकधावनोदीनामपीति बोध्यम् । तेषां प्रवृत्तिस्तु यथासम्भवं विधते ॥ ८ ॥

प्रश्नः—श्राद्धो गुरुमुखे पौषधमुच्चारयति तदा गमनागमने आलोचयति न वा ? ॥ ९ ॥

उत्तरम्—अत्र यदि स्वयं पौषधकरणानन्तरं गमनागमने कृते भवतस्तदा गुरुमुखे पौषधकरणावसरे ते आलोचयति नान्यथेति ॥९॥

इति सकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री-हीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डित-कीर्तिविजयगणिसमुच्चिते तृतीयः प्रकाशः ॥

१ धवतेति. प्र.

# चतुर्थः प्रकाशः

## जेसलमेरुसङ्घकृतप्रश्नाः

प्रश्नः—अपक्वफले बीजकर्षणादनु घटिकाद्वयानन्तरं प्रासुकं भवति नवा ? ॥ १ ॥

उत्तरम्—अग्निलवणादिप्रबलसंस्कारे प्रासुकं भवति नान्यथेति ॥ १ ॥

प्रश्नः—नारकाः पाश्चात्यभवशुभाशुभवार्तां कथं जानन्ति ? ॥ २ ॥

उत्तरम्—अत्र देवताकथनादिना जानन्ति ॥ २ ॥

प्रश्नः—देवद्रव्यभक्षकगृहे जेमनाय गन्तुं कल्पते न वा ? ॥ ३ ॥

उत्तरम्—अत्र देवद्रव्यभक्षकगृहे यदि कदाचित् परवशतया जेमनाय याति तथापि मनसि सशूकत्वं रक्षति न तु निःशूको भवति । जेमनद्रव्यस्य देवगृहे मोचने तु विरोधो भवति ततस्तदाश्रित्य दक्षत्वं विलोक्यते, यथाऽग्रेऽनर्थवृद्धिर्न भवति तथा करोति ॥ ३ ॥

प्रश्नः—कल्याणकतपसि क्रियमाणे पञ्चाष्टमशक्त्यभावे पाक्षिकादावाचाम्लादिकं करोति न वा ? ॥ ४ ॥

१ द्वयान्तरे इति- प्र.

उत्तरम्—अत्र षष्ठाष्टमकरणस्य सर्वथा शक्त्यभावे पाक्षिकादिपर्वतिथावाचाम्लादिकं करोति । कल्याणकतपःप्रवृत्तिस्तु परम्परया दृश्यते इति ॥ ४ ॥

प्रश्नः—प्रत्याख्यानकरणावसरे विकृतिद्वयं येन मुत्कलं रक्षितं भवति तस्य तृतीयविकृतिनिर्विकृतिकं कल्पते न वा ? ॥५॥

उत्तरम्—अत्र कारणं विना न कल्पते इति ॥ ५ ॥

प्रश्नः—'कयरीपाक' इत्यादिलोकप्रसिद्धानि पाकद्रव्याणि तद्दिवसनिष्पन्नानि आर्द्रशाकप्रत्याख्यानवतां कल्पन्ते न वा ? ॥६॥

उत्तरम्—अत्र कल्पन्ते ईदृशी प्रवृत्तिर्दृश्यते ॥ ६ ॥

प्रश्नः—मनुष्यक्षेत्राद् बहिश्चन्द्राः सूर्याश्च ये सन्ति ते तीर्थकृतां जन्मोत्सवे समवसरणे [1]आयान्ति न वा ? ॥ ७ ॥

उत्तरम्—अत्र तेषां तीर्थकृत्कल्याणकेषु देशनाश्रवणादिकार्ये च अत्रागमनप्रतिषेधो ज्ञातो नास्तीति ॥ ७ ॥

प्रश्नः—भरतक्षेत्रमध्ये सांप्रतं ये साधवः पञ्चसप्तशतादिक्रोशमध्ये दृश्यन्ते त एव किंवाऽन्येऽपि क्वापि संभवन्तीति ? ॥८॥

उत्तरम्—अत्र भरतक्षेत्रमध्ये इदानीन्तनसमये यत्र यत्र स्थाने आत्माभिज्ञायते तत्रैव यतयः संभाव्यन्ते नान्यत्रेति । तथापि अक्षरदर्शनं विनैकान्तेन कथयितुं न शक्यते यदन्यत्र स्थाने यतयो न सन्त्येवेति ॥ ८ ॥

प्रश्नः—आचाम्लमध्ये सुण्ठीमरिचादिकं कल्पते तत् किं कारणेन स्वभावेन वा ? ॥ ९ ॥

उत्तरम्—अत्र कारणं विनापि कल्पते इति ॥ ९ ॥

---

१ चेति. प्र.

प्रश्नः—आचाम्लमध्ये सुण्ठीमरिचादिकं कल्पते, लवङ्गपिप्पलीहरितकीप्रमुखं पुनर्न कल्पते तत् किं शास्त्राक्षरैः परम्परातो वा ? ॥ १० ॥

उत्तरम्—तत्रैतत्कारणं ज्ञायते यल्लवङ्गेषु दुग्धभक्तं दीयमानमस्ति, हरितकीपिप्पल्यादिकं नालिकातोऽपक्कं सत् शुष्कीक्रियते यथा युगन्धरीगोधूमादिपृथुको राद्धः सन्नाचाम्लमध्ये न कल्पते । युगन्धरीगोधूमादिकं तु राद्धं सत् कल्पते इति सम्भाव्यते ॥ १० ॥

प्रश्नः—उपासकेन केनचिच्चत्वार्युपधानान्युद्व्हानि भवन्ति, तन्मध्ये प्रथमोपधानस्य द्वादशवर्षातिक्रमे प्रथममेवोपधानं पुनरुद्वाह्य स मालां परिदधाति उत चत्वार्यपीति ? ॥ ११ ॥

उत्तरम्—अत्र प्रथमोपधानस्य द्वादशवर्षातिक्रमे पुनस्तस्मिन्नुद्व्हे माला परिहिता शुध्यति । अथ यदि मनः स्थाने तिष्ठति तदा चत्वार्यापि पुनरुद्वाह्य मालां परिदधातीति ॥ ११ ॥

प्रश्नः—उपधाने वाह्यमाने तपोदिने यदि कल्याणकतिथिरायाति तदा तेनैवोपवासेन सरति उताऽन्योऽधिकः कृतो विलोक्यते ? ॥ १२ ॥

उत्तरम्ः—अत्र उपधानतपोदिनान्तः कल्याणकतिथ्यागमने नियन्त्रिततपस्तया तेनैवोपवासेन सरतीति ॥ १२ ॥

१ लवङ्गेति शब्दो नास्ति. प्र. । २ लवङ्गेति. प्र. । ३ अत्राचाम्लमध्ये सुण्ठीमरिचादिकं कल्पते लवङ्गपिप्पलीहरितकीप्रमुखं पुनर्न कल्प्यते. प्र. ।

प्रश्नः—यः श्रावको नियमेन प्रत्यहं प्रतिक्रमणद्वयं कुर्वाणो भवति तस्य कालवेलायां सन्ध्याप्रतिक्रमणविस्मरणे कियतीं रात्रिं यावत् तद् शुध्यति ? ॥ १३ ॥

उत्तरम्—अत्र कारणविशेषे विस्मृतौ वा रात्रिप्रहरद्वयं यावत्तत् कर्तुं शुध्यतीति ॥ १३ ॥

प्रश्नः—येन शुक्लपञ्चमी उच्चरिता भवति स यदि पर्युषणायां द्वितीयातोऽष्टमं करोति तदैकान्तेन पञ्चम्यामेकाशनकं करोति उत यथारुच्येति ? ॥ १४ ॥

उत्तरम्—येन शुक्लपञ्चमी उच्चरिता भवति तेन मुख्यवृत्त्या तृतीयातोऽष्टमः कार्यः । अथ कदाचिद् द्वितीयातः करोति तदा पञ्चम्यामेकाशनकरणप्रतिबन्धो नास्ति, करोति तदा भव्यमिति ॥ १४ ॥

प्रश्नः—यदा चतुर्मासकं पूर्णिमायामभूत्तदा प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वा बभूवुः ?, तथा तानि शास्त्राक्षरबलतो विधीयमानानि परम्परातो [redacted] ?, शास्त्राक्षरबलेन चेत्तदभिधानं प्रसाद्यमिति ॥ १५ ॥

उत्तरम्—अत्र वर्षमध्ये प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वेति क्वापि ज्ञातं नास्ति, शास्त्रमध्ये तु दैवसिकरात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकलक्षणानि पञ्च प्रतिक्रमणानि प्रतिपादितानि सन्तीति ॥ १५ ॥

प्रश्नः—मौक्तिकानि सचित्तान्यचित्तानि वा कुत्र कथितानि सन्ति ? ॥ १६ ॥

उत्तरम्—अत्र मौक्तिकानि विद्धानि अविद्धानि वाऽचित्तानि ज्ञेयानि, यतः श्रीअनुयोगद्वारसूत्रे मौक्तिकरत्नादीनि अचित्त-

१ बलेनेति. प्र. । २ बलेनैवेति. प्र. । ३ चेति. प्र. । ४ वेति. प्र. ।

परिग्रहमध्ये कथितानि सन्तीति ॥ १६ ॥

प्रश्नः—सर्वार्थसिद्धविमाने मौक्तिकवलयानि शास्त्रे कथितानि परम्परातो वाऽभिधीयन्ते ?, शास्त्रे चेत्तदक्षराणि प्रसाद्यानि ॥ १७ ॥

उत्तरम्—अत्र सर्वार्थसिद्धविमाने मौक्तिकवलयाक्षराणि त्रुटितगाथासु परम्परायां भुवनभानुकेवलिचरित्रे च सन्ति, तथा च तद्गाथाः " तत्थ य महाविमाणे उपरिमभागंमि चहुए एगं । सायरस्स ६४ मणमाणं मुत्ताहलमुज्जलजलोहं ॥ १ ॥ मज्झगयस्स इमस्सय वलयागारेण ताव सोहंति । चत्तारि मुत्तिआइं निचानल ३२ मणपमाणाइं ॥ २ ॥ पुणरवि बीए वलए अह ८ संखाकलिअमुत्तिअकलावो रिउचंद १६ मणपमाणो दिप्पइ खजलं व मलमुक्को ॥ ३ ॥ चंदकलासंखाइं चंदकलानिम्मलगुणाइं । तइए वलए अडमणपमिआइं मुत्तिआणि तओ ॥ ४ ॥ लोअण-किसाणु ३२ पमिआणि मुत्तिअफलाणि तुरिअवलयंमि । अलहिअंमणसरीसाइं नायव्वाइं विअट्ठेहिं ॥ ५ ॥ बेअरस ६४ संखया पुण पंडिअमुत्तिअफलाणि जाणीहि । पंचमवलयम्मि तओ लोअण २ मणभारमाणाइं ॥ ६ ॥ कुंजरलोअणवसुहा १२८ मिआणि मुत्ताहलाणि नेआणि । इगमणभारवहाइं छट्ठे वलयम्मि वट्टाइं ॥ ७ ॥ मुत्ता-हलमंतट्ठिअअणेगवजंततापलहरीहिं । वलयगमुत्तिअनिअरो समुच्छलिआ आहणेइ जया ॥ ८ ॥ एअं महाविमाणं महुरवे कंतमायणं जायं । कत्थवि अन्नत्थ न अत्थि परिसंसद्दमहुरत्तं ॥ ९ ॥ तत्थ विमाणम्मि सुरा तक्कायरसेग-

१ उवरीति. प्र. । २ मुत्तिमुत्तिआइं इति. प्र. । ३१६. इति. प्र. । ४. ४ इति. प्र. ।

मोहिअसचित्ता । समयगिग ३२ सायरमिअं सुहेणं पूरंति निअयाउ ॥ १० ॥ इति ॥ १७ ॥

प्रश्नः—येषां गृहे पुत्रपुत्रीजन्म जातं भवति तद्गृहमनुजाः खरतरपक्षे स्वगृहपानीयेन देवपूजां न कुर्वन्ति, तयतिनोऽपि तद्गृहे दश दिनानि यावन्न विहरन्ति, तदक्षराणि कुत्र सन्ति ? आत्मपक्षे चैतदाश्रित्य को विधिः ? ॥ १८ ॥

उत्तरम्—अत्र यद्गृहे पुत्रपुत्रीप्रसवो जातो भवति तद्गृहपानीयेन देवपूजा न शुध्यतीत्यक्षराणि शास्त्रे ज्ञातानि न सन्तीति । तथा तद्गृहविहरणमाश्रित्य यस्मिन् देशे यो लोकव्यवहारस्तेंशानुसारेण[1] यतिभिः कर्तव्यं दशदिननिर्बन्धस्तु शास्त्रे ज्ञातो नास्तीति ॥ १८ ॥

## देवगिरिसङ्घकृतप्रश्नाः—

प्रश्नः—पाक्षिकप्रतिक्रमणे गीतार्थैः क्षामणावसरे " नित्थारपारगाहोह " इति कथ्यते तदा श्रावकादिभिरपि किमेतदेव कथनीयमुत " इच्छामो अणुसट्ठिं " इति ? ॥ १ ॥

उत्तरम्—अत्र श्रावकादिभिः " इच्छामो अणुसट्ठिं " इत्येव कथनीयं न तु " नित्थारपारगाहोह " इति ॥ १ ॥

प्रश्नः—पाक्षिकप्रतिक्रमणपर्यन्ते गीतार्था यस्य शान्तिकथनाऽऽदेशं ददति स श्रावकः दुक्खक्खयकम्मक्खयनिमित्तं काउस्सग्गं चतुर्लोगस्समप्रमाणं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति, कथनानन्तरं पुनरपि पञ्चदसलोगस्स-

१ तदनुसारेणेति. प्र. ।

काउसग्गं विधाय प्रकटमेकं च कथयित्वा पौषधं पारयतीति केचन कथयन्ति । केचिच्च यस्य शान्तिकथनादेशो दत्तो भवति स चतुर्लोगस्समानं काउसग्गं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति पश्चात् पौषधं पारयतीति कथयन्ति । अनयोर्मध्ये यो विधिः प्रमाणं स प्रसाद्य इति ॥ २ ॥

उत्तरम्—अत्र पाक्षिकप्रतिक्रमणे शान्तेः कथयिता अग्रतश्चतुर्लोगस्सकाउसग्गं कृत्वा प्रकटमेकं च कथयित्वा शान्तिं कथयति एतावतैव शुध्यति, द्वितीयवारं पञ्चदशलोगस्सकाउसग्गकरणे विशेषो ज्ञातो नास्तीति ॥ २ ॥

प्रश्नः—महावीरस्य निर्वाणसमये अमावास्या तिथिः स्वातिनक्षत्रं चाभूताम् । दीपालिकासम्बन्धिगुणनसमये च कस्मिंश्चिद्वर्षे ते भवतः कस्मिंश्चिच्च नेति । एतदुपरि केचनेत्थं कथयन्ति यद् यदा स्वात्यमावास्ये भवतस्तदा गुणनीयम् । अन्ये च यस्मिन् दिने ' मेरइया ' इति लोकप्रसिद्धिः क्रियाविशेषस्तस्मिन् दिने गुणनीयमिति । तत्र ' मेरइया 'करणे भेदो भवति, एतद्देशमध्ये ये गूर्जरलोकास्सन्ति तैः पाक्षिकादिने तानि कृतानि एतद्देशीयैस्तु द्वितीयवासरे, ततः किं स्वस्वदेशानुसारेण मेरइयाकरणदिने गुणनीयम् ? उत गूर्जरदेशानुसारेण ? ॥ ३ ॥

उत्तरम्—अत्र दीपालिकागुणनमाश्रित्य स्वदेशीयलोका यस्मिन् दिने दीपालिकां कुर्वन्ति तस्मिन् दिने गुणनीयमिति ॥३॥

प्रश्नः—प्रासादे ये केचन यतयः श्राद्धाश्च प्रतिमास्नपनकरणावसरे चैत्यवन्दनां न कुर्वन्ति ते चेत्थं कथयन्ति यदवस्थाहेतुना न क्रियते इति । इतरे च भगवतां कास्त्वस्थेति यदा प्रासादे गम्यते तदा तदा चैत्यवन्दना क्रियते इति । तत्र किं प्रमाणम् ? ॥ ४ ॥

उत्तरम्—अत्र प्रासादे प्रतिमास्नपनकरणावसरे चैत्यवन्दनकरणप्रतिषेधो ज्ञातो नास्तीति ॥ ४ ॥

## द्वीपबन्दरसङ्घकृतप्रश्नाः—

प्रश्नः—देवगृहमध्ये पौषधिका देवान् वन्दन्ते तदा ईर्यापथिकीप्रतिक्रमणावसरे उत्तरासङ्गं कृतं विलोक्यते न वा? ॥ १ ॥

उत्तरम्—अत्र यदा देवगृहमध्ये पौषधिका देवान् वन्दन्ते तदेर्यापथिकीप्रतिक्रमणावसरे उत्तरासङ्गस्य कार्यं दृश्यमानं नास्ति, वृद्धा अपि इत्यमेव कथयन्तः श्रुतास्सन्ति। किञ्च, ईर्यापथिकी देववन्दनक्रियामध्ये नास्ति तेन देववन्दनायां क्रियमाणायामन्यदा च देवगृहमध्येऽवस्थितानुत्तरासङ्गं कृतं विलोक्यते, क्रिया तु विधिनैव भवतीति ॥ १ ॥

प्रश्नः—प्रभातप्रतिक्रमणसमये प्रथमतः कुसुमिणदुसुमिणउड्डावणिअं काउसग्गं चतुर्लोगस्समानं करोति तदा "चंदेसु निम्मलयरा" इति यावत् "सागरवरगंभीरा" इति यावद् वा? ॥ २ ॥

उत्तरम्—अत्र सामान्येन "चंदेसु निम्मलयरा" इति यावत् करोति। यदा पुनः स्वप्ने तुर्यव्रतातीचारो जातो भवति तदा नमस्कारमेकमधिकं चिन्तयतीति ॥ २ ॥

प्रश्नः—प्रभातप्रतिक्रमणे प्रथमतः कुसुमिणदुसुमिणकाउसग्गं चैत्यवन्दनां च कृत्वा चत्वारि क्षमाश्रमणानि ददाति ततः स्वाध्यायं करोति? उत स्वाध्यायं कृत्वा क्षमाश्रमणानि ददाति? ॥ ३ ॥

---

१ यदेति. प्र.।

उत्तरम्—अत्र प्रभातप्रतिक्रमणे प्रथमचतुर्लोगस्स(कस्य)मानं काउसग्गं ( कायोत्सर्गं ) चैत्यवन्दनां च कृत्वा चत्वारि क्षमाश्रमणानि दत्त्वा क्षमाश्रमणयुगेन स्वाध्यायं च कृत्वा प्रतिक्रमणं करोति । यत उक्तम्–ईरियाकुसुमिणुसग्गो, जिणमुणिवंदण तहेव सज्झाओ । सव्वस्सवि सक्कथओ, तिन्नि य उस्सग्गा कायव्वा ॥ १ ॥ एषा गाथा श्रीसोमसुन्दरसूरिकृतसामाचारीमध्ये वर्तते । तथा श्रीविजयदानसूरयोऽपि इत्थमेव कृतवन्तस्तच्छिष्या च वयमपि तथैव कुर्म इति । अथ स्वाध्यायानन्तरं चत्वारि क्षमाश्रमणानि देयानीतिविधिः क्वापि ग्रन्थे वर्तते, तस्यापि प्रतिषेधो नास्ति परं यथा वृद्धाः कृतवन्तस्तथैवेदानीं कुर्म इति ॥ ३ ॥

प्रश्नः—उष्णकालादौ उष्णं प्रासुकं वा पानीयं पञ्चादिप्रहरं यावदचित्तं ततः परं सचित्तं भवतीति अक्षराणि कुत्र सन्ति ? । तथा तत्र यावत् त्रसजीवोत्पत्तिर्जाता न भवति तावदगालितं तत् पातुं कल्पते न वा ? ॥ ४ ॥

उत्तरम्—अत्र उष्णकालादौ उष्णं प्रासुकं वा पानीयं पञ्चादिप्रहरं यावदचित्तं, ततः परं सचित्तं भवतीत्यक्षराणि प्रवचनसारोद्धारसवृत्तिमध्ये प्रोक्तानि सन्ति । तथा तत्र त्रसजीवोत्पत्तिर्जाता भवतु मा वा तथापि गालितमेव तद् व्यापारणीयं, नाऽगालितमिति परम्परा दृश्यते ॥ ४ ॥

प्रश्नः—पञ्चमी[1] तिथिस्त्रुटिता भवति तदा तपः कस्यां तिथौ ?, पूर्णिमायां च त्रुटितायां कुत्रेति ॥ ५ ॥

१ अनेन प्रश्नेन प्रातःस्मरणीयनामधेयश्रीहीरसूरीश्वराणां समयेऽपि पर्व–तिथीनां क्षयवृद्धी आस्तामिति विज्ञायते पञ्चमी-पूर्णिमा क्षये चतुर्थीत्रयोदशीक्षयकारिणामाधुनिकमते तु प्रश्नस्यैवानवकाशश्चतुर्थीत्रयोदशीक्षयकारित्वात्, चतुर्थीत्रयोदशीत्रुटितत्वेन

उत्तरम्—अत्र पञ्चमी तिथिस्त्रुटिता भवति तदा तत्तपः पूर्वस्यां तिथौ क्रियते । पूर्णिमायां च त्रुटितायां त्रयोदशीचतुर्दश्योः क्रियते, त्रयोदश्यां तु विस्मृतौ प्रतिपद्यपीति ॥ ५ ॥

प्रश्नः—अक्षमालादिका स्थापना या नमस्कारेण निधीयते तदुपरि उद्योते दृष्टिरक्षणं सुकरम्, अन्धकारे कथं भवति ? तद्विना च स्थापना शुध्यति न वा ? ॥ ६ ॥

पञ्चमीपूर्णिमा न त्रुटिता भवतीत्यनुक्त्वा पूर्वस्यां तिथौ क्रियते इत्युत्तरस्यामप्रतत्वापत्तेश्च । न च पूर्वस्यां तिथौ इत्यस्यपूर्वतिथित्वेन व्यवह्रियमाणा वस्तुतः पञ्चमी रूपा तिथिरेव तपसः कार्यत्वेन निर्दिष्टेति वाच्यम् स्वाधीने शब्दप्रयोगे स्फुटतरमप्रतिपाद्य तथोत्तरकरणस्यायुक्तत्वात् । न च तपोऽनुष्ठानविषयकप्रश्नस्य तद्विषयकनिर्णयादेवोपशमात् न चतुर्थीक्षयविषयकोत्तरस्य साधुत्वमिति वाच्यम् । तथापि लौकिकव्यवहारापेक्षया पूर्वस्यां तिथौ इति वक्तुमुचितत्वात् । न चायमेवाऽऽशयः प्रत्युत्तरदातुरिति वाच्यं प्रमाणाभावात् सति पर्वतिथीनां क्षयिताभावसाधके प्रमाणे तथाभिप्रायवर्णनं युज्येत । न चैवं दृश्यते कापि प्रत्यक्षं शास्त्रवचनम्, दृश्यन्ते च तत्क्षयप्रकाशकान्येव वचनानि अतो वचनस्वरसलब्धार्थवासितचेतास्तथाभावं वर्णयेत् तद्वचनानां, न च चतुर्थ्यां पञ्चमी प्रयुक्त तपसोऽनुष्ठानविधानं मिथ्यारूपत्वादयुक्तमिति वाच्यम् । तत्र तत्तिथौ पञ्चम्या अन्तर्गतत्वेन मिथ्यारूपत्वाभावात् । तपसो वा अचिन्त्यमहिमतया यथाध्यवसीयानुष्ठानेऽपि तत्फलप्रदत्वात् इमावेवाभिप्रायौ त्रयोदशीचतुर्दश्योः त्रयोदश्यां विस्मृतौ तु प्रतिपद्यपीति विधानद्वयेनाविष्कृतौ । तत्र त्रयोदशीचतुर्दश्योरित्यनेन तयोः चतुर्दशी पूर्णिमासम्बन्ध आविष्कृतः । प्रतिपद्यपीत्यनेनाचिन्त्यमहिमत्वं सूचितम् । प्रतिपदि दिने चतुर्दश्याः पौर्णमास्या सम्बन्धाभावात् तत्रापि तत्सम्बद्धतिथिलाभे सैव प्राह्येति सूचयितुं

उत्तरम्—अत्र अक्षमाला पुस्तकादिकस्थापना नमस्कारेण स्थाप्यते, स्थापनानन्तरं च क्रियाकरणं यावदुद्योते यथाशक्ति दृष्टयुपयोगौ रक्ष्येते; अन्धकारे चोपयोगो, दृष्टयुपयोगयोरन्तरे जाते तु पुनः स्थापनां कृत्वाऽग्रतः क्रिया क्रियते । यतः स्थापना द्वेधा, इत्वरा यावत्कथिका च । तत्रेत्वराऽक्षमालादिका या नमस्कारेण स्वयं स्थापिता सा दृष्टयुपयोगयोः सतोरेव तिष्ठति । यावत्कथिका चाक्षप्रतिमादिका या गुरुसकाशात् स्थाप्यते, सा पुनः पुनः स्थापिता न विलोक्यते इति ॥ ६ ॥

प्रश्नः—मालापरिधाने प्रवेदनं करोति न वा ? ॥ ७ ॥

उत्तरम्—अत्र मालापरिधाने प्रवेदनकरणे नियमो ज्ञातो नास्तीति ॥ ७ ॥

प्रश्नः—उपधानपूर्णीभवनानन्तरं तपोवासरे उत्तरितुं कल्पते न वा ? ॥ ८ ॥

उत्तरम्—अत्र उपधानपूर्णीभवनानन्तरं तपोवासरे नोत्तीर्यते, तथाविधकारणे गीतार्थाऽऽज्ञापूर्वकमुत्तरणे एकान्तेन निषेधो

त्रयोदशीचतुर्दश्योः प्रथमं ग्रहणं कृतं विस्मरणे त्यागो नोक्तः किन्तु असम्बन्धप्रतिपद्दिवसे विधानं कृतं तेनचाचिन्त्यप्रभावत्वं तपसः सूचितं अतस्तथाऽप्यवसीयानुष्ठानमपि फलदमिति निर्विवादमेवेति ॥ किञ्च पूर्णिमायां इत्यादि प्रश्नः सुये न केवलं पूर्णिमा-मात्रप्रयुक्तपःकालनिर्णयार्थं प्रवृत्तः तस्यपूर्वप्रश्ने एवान्तर्गतत्वात् पृथक् प्रश्नवैयर्थ्यापत्तेः अपितु पूर्णिमायां त्रुटितायां पूर्णिमा चतुर्दशीतपःकालनिर्णयार्थमेव, अत एव च चतुर्दशीत्रयोदश्योरिति द्विवचनोपन्यासः । तत्र त्रयोदशीविस्मरणे चतुर्दशीप्रतिपदौ ग्राह्ये त्रयोदश्यामनुष्ठाने चतुर्दश्या विस्मरणासंभव एवेति चतुर्दशीविस्मृतौ इति नोक्तमित्यवधेयम् । १ प्रवेदनकमिति प्र. ।

ज्ञातो नास्तीति ॥ ८ ॥

प्रश्नः—केचित् पृच्छन्ति नन्दिमण्डनाक्षराणि कुत्र सिद्धान्ते वर्तन्ते ? ॥ ९ ॥

उत्तरम्—अत्र नन्दिमण्डनाक्षराणि अनुयोगद्वारवृत्ति-सामाचारीप्रमुखग्रन्थेषु वर्तन्ते, तथा परम्परयापि नन्दिर्मण्ड्यमाना ज्ञायते इति ॥ ९ ॥

प्रश्नः—पौषधमध्ये सामायिकद्वात्रिंशद् दोषा लगन्ति न वा ? ॥ १० ॥

उत्तरम्—अत्र सामायिकद्वात्रिंशद्दोषा पौषधे[1] लगन्तो ज्ञायन्तेऽतस्तानुत्सर्गतो न लगयन्ति, कारणे यदि लगयति तदाऽऽलोचयति-प्रतिक्रामतीति ॥ १० ॥

प्रश्नः—पौषधे थकलातसंस्तारिकं व्यापारयितुं कल्पते न वा ?, तथा तम्बोलो भक्षयितुं कल्पते न वा ? तथा जेमनोपकरणानि कथं गृह्यन्ते यतस्तत्र मुत्कलानीतवस्तु कल्पते न चेति ? ॥ ११ ॥

उत्तरम्—अत्र थकलातसंस्तारिकं पौषधमध्ये व्यापारयितुं कल्पते, तथा तम्बोलो लवङ्गकाष्ठादिकं कारणे पौषधमध्ये भक्षयितुं कल्पते, तथा मुत्कलानीतोपकरणानां शुष्यमानानां निषेधो ज्ञातो नास्तीति ॥ ११ ॥

प्रश्न—देवा यदा स्वकीयेतरकल्पे यान्ति तदा तत्रत्यानि चैत्यानि वन्दन्ते न वा ? ॥ १२ ॥

उत्तरम्—अत्र देवा यदा स्वकीयेतरदेवलोके यान्ति तदा तत्रत्यचैत्यवन्दननिषेधो नास्ती इति ॥ १२ ॥

---

१ पौषधमध्ये इति. प्र.।

प्रश्नः—जम्बूद्वीपगतमेरोः परितो यथैकविंशत्यधिकैकादशशतयोजनान्यबाधां कृत्वा ज्योतिश्चक्रं भ्राम्यति तथाऽन्यद्वीपगतमेरुभ्योऽपि कियतीमबाधां कृत्वा भ्रमतीति ? ॥ १३ ॥

उत्तरम्—अत्र जम्बूद्वीपगतमेरोः परितो यथैकविंशत्यधिकैकादशशतयोजनान्यबाधां कृत्वा ज्योतिश्चक्रं भ्राम्यति तथैवान्यद्वीपगतमेरुभ्योऽपीति सम्भाव्यते, शास्त्राक्षराणि तु व्यक्ततया दृष्टानि न स्मरन्तीति ॥ १३ ॥

प्रश्नः—कायोत्सर्गे वन्दनकदानावसरे च स्थापनाचार्यचालनं शुध्यति न वा ? ॥ १४ ॥

उत्तरम्—अत्र कायोत्सर्गकरणावसरे वन्दनकदानावसरे च स्थापनाचार्यचालनं न शुध्यतीत्येकान्तो ज्ञातो नास्तीति ॥ १४ ॥

प्रश्नः—मतान्तरीयस्य कदाचिदुपवासादि प्रत्याख्यानं कार्यते तत्र " पाणस्स " इत्युच्चारणमाश्रित्य किं विधेयम् ? यतस्तस्य कसेल्लकादिपानीयपाने कथं तत्पालनं भवति ? ॥ १५ ॥

उत्तरम्—अत्र मतान्तरीयस्य प्रत्याख्यानकरणे " पाणस्स " इत्युच्चारणे स यदि कसेल्लकादिपानीयं पिबति तदा प्रत्याख्यानभङ्गो ज्ञातो नास्ति, यतः कसेल्लकक्षेपेऽपि पानीयं प्रासुकं भवति परं आत्मनामाचरणा नास्तीति न शूक्यते इति ॥ १५ ॥

प्रश्नः—साम्प्रतं क्रियमाणः स्नात्रादिविधिः केन कृतः कुत्र वा ग्रन्थे वर्तते ? ॥ १६ ॥

उत्तरम्—अत्र साम्प्रतं क्रियमाणः स्नात्रादिविधिः कियान् परम्परया कियांश्च श्राद्धविधिमध्ये कथितोऽस्तीति ॥ १६ ॥

प्रश्नः—केवली केवलिसमुद्घातं यदा करोति तदाऽऽत्मप्रदेशैः त्रसनाडीमेव पूरयति किंवा सम्पूर्णं लोकम् ? ॥ १७ ॥

उत्तरम्—अत्र केवली केवलिसमुद्घातं यदा करोति तदा सम्पूर्णं लोकं पूरयतीति ॥ १७ ॥

प्रश्नः—चतुर्विंशतिपट्टपञ्चतीर्थीप्रतिमादिषु ऋषभादितीर्थकृतः केनाऽनुक्रमेण गण्यन्ते ?, तथा सूत्रधारसम्बन्धि " गज " इति प्रसिद्धमानेन भूमिकातः सार्धहस्तोच्चप्रदेशे देवानमरकरणं प्रोक्तमस्ति तदुत्कृष्टकालादावात्माङ्गुलवृद्धिहानिमत्त्वे कथं घटते ? इति ॥ १८ ॥

उत्तरम्—अत्र चतुर्विंशतिपट्टपञ्चतीर्थीप्रतिमादिषु ऋषभादितीर्थकृतोऽनेनैवानुक्रमेण गण्यन्त इत्येकान्तो नास्ति । तथा सूत्रधारसम्बन्धि " गज " इति प्रसिद्धमानानुसारेण भूमिकातः सार्धहस्तोच्चप्रदेशे देवाऽनसरकरणे उत्कृष्टकालादात्माङ्गुलवृद्धिमानमपि तदनुसारेणैव भवतीति ॥ १८ ॥

प्रश्नः—उपधानविधिरेकान्तरोपवासैस्तद्वाहनं च कुत्र शास्त्रे केन वा ते कथिते स्तः ? ॥ १९ ॥

उत्तरम्—अत्र उपधानविधिरेकान्तरोपवासैस्तद्वाहनं च निशीथसामाचारीप्रमुखग्रन्थानुसारेण परम्परानुसारेण च ज्ञातव्ये इति ॥ १९ ॥

प्रश्नः—"कपरीपाक" इत्यादिलोकप्रसिद्धद्रव्याणि आमनाथार्द्रशाकानयवनिष्पन्नतया तत्प्रत्याख्यानवतां कल्पन्ते न वा ?॥२०॥

उत्तरम्—अत्र "कपरीपाक" इत्यादिलोकप्रसिद्धपाकद्रव्याणि आसनाथार्द्रशाकनिष्पन्नान्यपि तत्प्रत्याख्यानवतां कल्पन्ते इति प्रवृत्तिर्दृश्यते इति ॥ २० ॥

---

१ पठ्यते इति. प्र. । २ शावो इति. । प्र. ३ महानिशीथेति. प्र. ।

प्रश्नः—पौषदशमीरात्रौ श्रीपार्श्वनाथजन्मकल्याणकं, तत्र सा रात्रिः किं नवमीदशम्योरन्तरा उत दशम्येकादश्योरन्तरा ? तथा तत्स्नात्रं दशम्यामेकादश्यां वा क्रियते ? ॥ २१ ॥

उत्तरम्—अत्र श्रीपार्श्वनाथजन्मकल्याणकं दशमीरात्रौ जातमस्ति ततो दशमीदिने स्नात्रं करणीयमिति ॥ २१ ॥

प्रश्नः—प्रतिक्रमणे आलोचनानन्तरं " ठाणे कमणे " इत्यादि कथयित्वा गमनागमनाऽऽलोचनादेशो मार्ग्यते, केचिच्चाऽप्रमार्जितभूमिगमने; इत्येतदाश्रित्याऽपि यथोचितं प्रसाद्यमिति ॥ २२ ॥

उत्तरम्—अत्र प्रतिक्रमणे आलोचनानन्तरं " ठाणे कमणे " इत्यादि कथयित्वा गमनागमनेऽऽलोचनं मार्गणीयं ज्ञायते । तथा पौषधमध्ये स्थण्डिलादिकार्ये बहिर्गत्वा आगमाऽनन्तरं गमनागमनेऽऽलोचनं ज्ञायते इति ॥ २२ ॥

प्रश्नः—पौषधे उच्चारिते कः सावद्यव्यापारः स्थितो वर्तते यदर्थं सामायिकमुच्चार्यते ? । तथा पौषधे देशावकाशिकं नोच्चार्यते सामायिके चोच्चार्यते तत्र किं प्रयोजनम् ? ॥ २३ ॥

उत्तरम्—अत्र पौषधकरणानन्तरं यत् सामायिकमुच्चार्यते तत् सहजापतितं नवमव्रताराधनार्थं, यत् पुनर्देशावकाशिकं न क्रियते तत् पौषधिको निरवद्यतया गमनादौ प्रवर्तते, तत्करणे किं प्रयोजनमिति । देशावकाशिककरणं तु सामायिके द्विघटिकामाने पारितेऽपि ततः परं विरतिकरणार्थमिति ॥ २३ ॥

१ तत्रेति. प्र. । २ कथयन्ति न मार्ग्यते तदाश्रित्य यथा भवति तथा प्रहस्तशवात् बहिर्गमनागमनेऽऽलोचनादेशोमार्ग्यते इति. प्र. । ३ नेति. प्र. । ४ सामायिकमध्ये इति प्र. । ५ तत्र जीवा उत्पद्यन्ते इति. प्र. ।

प्रश्नः—द्विदलमाश्रित्य केचिदित्थं वदन्ति यद् द्विदलतक्रमुखत्रयसंयोगे उत्पद्यन्ते जीवा इति । केचित्तु द्विदलतक्रसंयोगे, इत्येतदुपरि यच्छास्त्रानुसारि भवति तत् प्रसाद्यमिति ॥ २४ ॥

उत्तरम्—अत्र द्विदलमध्ये अपक्वदुग्धदधितक्रसंयोगे जीवा उत्पद्यमाना ज्ञातास्सन्ति । शास्त्रानुसारेणाऽपि मुखसंयोगे तत्र जीवा उत्पद्यन्ते इति तु ज्ञातं नास्तीति ॥ २४ ॥

प्रश्नः—साधारणप्रासादे प्रतिमायां कार्यमाणायां ग्रामनाम्ना प्रतिमा विलोक्यते उत सङ्घराशिनाम्ना ? यदि सङ्घराशिनाम्ना तदा सर्वग्रामसङ्घानामेकमेव राशिनाम विद्यते, तेन यथा युक्तं भवति तथा प्रसाद्यमिति ॥ २५ ॥

उत्तरम्—अत्र साधारणप्रासादे प्रतिमायां कार्यमाणायां ग्रामनाम्ना प्रतिमा विलोक्यते इति युक्तं ज्ञायते ॥ २५ ॥

प्रश्नः—पञ्चव्रतसंक्षेपरूपा प्रत्यहं द्विर्दिगागमनविरतिर्देशावकाशिकाख्ये दशमव्रते, चतुर्दशनियमास्तूपभोगविरमणाख्ये सप्तमव्रते, तत्कथं देशावकाशिककरणेनैव ते उच्चार्यन्ते ? ॥ २६ ॥

उत्तरम्—अत्र देशावकाशिकं द्वेधा, एकं पञ्चव्रतसंक्षेपरूपं क्रियमाणमस्तीति न कापि विप्रतिपत्तिरिति ॥ २६ ॥

प्रश्नः—उपधानवाचना नमस्कारं विना दीयते उत तत्पूर्विका ? ॥ २७ ॥

उत्तरम्—अत्र उपधानवाचनां श्रीविजयदानसूरयो नमस्कारं विनैव दत्तवन्तो वयमपि तथैव दद्म इति ॥ २७ ॥

प्रश्नः—उपधानवाचना पारणादिने उत तपोदिने ?, तथोपधानवाचना प्रातः सन्ध्यायां वा दीयते ?[1] ॥ २८ ॥

१ प्रतिदिन दिग्विरतिरूपं द्वितीयं सर्वव्रतसंक्षेपरूपमिति. प्र. ।

उत्तरम्—अत्र उपधानवाचना तपोवासरे पारणादिने वा दत्ता शुध्यति [1] तथोपधानवाचना चाऽऽचाम्लैकाशनककरणानन्तरं संध्यायामपि दत्ता शुध्यति परं प्रतिदिनक्रियमाणसन्ध्यासमयक्रिया पश्चात् क्रियते ॥ २८ ॥

प्रश्नः—चतुर्मासकमध्ये मालारोपणनन्दिः कुतः प्रभृति विधीयते ? ॥ २९ ॥

उत्तरम्—अत्र चतुर्मासकमध्ये तुर्यव्रतमालारोपणनन्दिः विजयदशम्यनन्तरं भवति द्वादशव्रतनन्दी त्ववागपि भवन्ती दृश्यते इति ॥ २९ ॥

प्रश्नः—उपधानमध्ये आर्द्रशाकभक्षणं कल्पते न वा ?, तथा विलेपनमस्तकतैलप्रक्षेपादिकं कल्पते न वा ? ॥ ३० ॥

उत्तरम्—अत्र उपधानमध्ये सांप्रतं आर्द्रशाकभक्षणरीतिर्नास्ति। तथा विलेपनमस्तकतैलप्रक्षेपादिकं यतिवत् स्वयं न वाञ्छति, अन्यः कश्चिद् यदि भक्तिं करोति तदा निषेधो ज्ञातो नास्तीति ॥ ३० ॥

प्रश्नः—श्रावकश्राविकाणां नन्दीसूत्रश्रावणं " नाणं पंचविहं पन्नत्तं " इत्यादिरूपं नमस्कारत्रयरूपं वा क्रियते ? ३१ ॥

उत्तरम्—अत्र श्रावकश्राविकाणां नन्दीसूत्रं नमस्कारत्रयरूपं श्राव्यते इति ॥ ३१ ॥

प्रश्नः—उपधानवाचनां श्राद्धाः श्राद्धयोर्ध्वस्थानेन गृह्णन्ति उपविश्य वा ? ॥ ३२ ॥

उत्तरम्—अत्र उपधानवाचनां श्राद्धय ऊर्ध्वस्थिता शृण्वन्ति, श्राद्धास्तु चैत्यवन्दनमुद्रयेति ॥ ३२ ॥

प्रश्नः—पौषधिकः श्राद्धो वस्त्रेण मस्तकं बन्धयित्वा देवगृहमध्ये गत्वा देववन्दनं करोति न वा ? ॥ ३३ ॥

१ उपधानवाचनापारणादिने दीयते न वा ? तथा उप–इत्यपि पाठ.

उत्तरम्—अत्र पौषधिकश्राद्धस्य मुख्यवृत्त्या मस्तकबन्धनाधिकारो नास्ति, कारणे यदि " फालीउं " इतिप्रसिद्धवस्त्रेण बन्धने देवगृहमध्ये देववन्दनादिक्रियायां क्रियमाणायां छोटितं विलोक्यते । अन्यो विशेषो ज्ञातो नास्तीति ॥३३॥

प्रश्नः—सांवत्सरिकपाक्षिकाऽष्टमीज्ञानपञ्चमीरोहिणीतपांसि येन यावज्जीवमुच्चरितानि भवन्ति स रोहिण्या अग्रतः पृष्ठतो वा आगमने पष्ठकरणशक्त्यभावे किं करोति ? ॥ ३४ ॥

उत्तरम्—अत्र सर्वथा षष्ठकरणशक्त्यभावे यत्तपः प्रथममागच्छति तत्तपः प्रथमं करोति, स्थितं तु पश्चात् कृत्वा प्रापयतीति ॥३४॥

प्रश्नः—श्राद्धानामेकादशाङ्गेषु श्राव्यमाणेषु नन्दिर्मण्डिता विलोक्यते न वा ? ॥ ३५ ॥

उत्तरम्—अत्र श्राद्धानामेकादशाङ्गश्रावणे नन्दिमण्डनाधिकारो ज्ञातो नास्तीति ॥ ३५ ॥

प्रश्नः—अन्यतीर्थीयः कश्चिद् यदि तुर्यव्रतमुच्चारयति तदा नन्दिं विनापि उच्चार्यते उत नन्दिसहितमेव ? ॥ ३६ ॥

उत्तरम्—अत्र अन्यतीर्थीयः कश्चित् तुर्यव्रतमुच्चारयति तदा नन्दिं विनापि उच्चार्यते, तदाश्रित्य निषेधः कोऽपि ज्ञातो नास्तीति ॥ ३६ ॥

प्रश्नः—पौषधिकः श्राद्धो यद्याहारं गृह्णाति तदा तस्य जेमनानन्तरं चैत्यवन्दनकरणमन्तरा पानीयं पातुं शुध्यति न वा ?, तथा स्वाभाविक उपधानवाहकश्चाहारग्राहकपौषधिकः सन्ध्यासमयप्रतिलेखनां केनाऽनुक्रमेण करोति ? ॥ ३७ ॥

उत्तरम्—अत्र पौषधिकश्राद्धस्याहारग्रहणानन्तरं चैत्यवन्दनायां कृतायामेव पानीयं पातुं शुध्यति नान्यथा यतः पौषधमध्ये श्राद्धस्यापि यती क्रियारीतिर्यतिवदेव वर्तते । तथाऽऽहारग्राहकपौषधिकः सन्ध्यासमये प्रतिलेखनामुखवस्त्रिकां

प्रतिलिख्य परिधानांशुकं परावृत्य " पडिलेहणा पडिलेहावो " इत्यादेशं मार्गयित्वा तत्कृत्यं विधाय उपधिं मुखपटीं प्रतिलिख्य स्वाध्यायं कृत्वा वन्दनकद्वयं दत्त्वा प्रत्याख्यानं कृत्वा " उपधि संदिसावुं उपधि पडिलेहुं " इत्यादेशद्विकं क्षमाश्रमणद्विकेन मार्गयतीतिसामाचारी वर्तते । उपधानपौषधिकस्याऽयं विशेषो यत् पानीयक्षारणानन्तरं गुरुपार्श्वे स्थापनाचार्यपार्श्वे वा मुखवस्त्रिकां प्रतिलिख्य वन्दनकद्वयं दत्त्वा च प्रत्याख्यानं करोति, पुनः प्रतिलेखनासमये वन्दनकदानप्रत्याख्यानं करोति । अन्यदन्तरं तु ज्ञातं नास्तीति ॥ ३७ ॥

प्रश्नः—रात्रिपौषधिकः प्रस्रवणोच्चारभूम्योः कति मण्डलकानि करोति ? ॥ ३८ ॥

उत्तरम्—अत्र रात्रिपौषधिकः प्रस्रवणोच्चारपरिष्ठापनभूम्योश्चतुर्विंशतिमण्डलकानि करोति, द्वादशमध्ये द्वादश बहिश्च, " बारस बारस दुन्नि अ " इति वचनात् ॥ ३८ ॥

प्रश्नः—यः सन्ध्यायां रात्रिपौषधं करोति स तदुच्चारणानन्तरं पानीयं पिबति न वा ? ॥ ३९ ॥

उत्तरम्—अत्र यः सन्ध्यायां रात्रिपौषधं करोति तस्याहारपौषधः सर्वत एवोच्चार्यते न देशतस्तेन दिवसपौषधो भवतु मा वा परं रात्रिपौषधकरणानन्तरं स पानीयं न पिबतीति ॥ ३९ ॥

प्रश्नः—त्रिविधाहारप्रत्याख्याननिर्विकृतिकैकाशनद्व्यासनकेषु आर्द्रशाकभक्षणं शुध्यति न वा ? ॥ ४० ॥

उत्तरम्—अत्र निर्विकृत्यादिषु त्रिविधाहारप्रत्याख्यानेषु एकान्तेन आर्द्रशाकभक्षणनिषेधो ज्ञातो नास्ति, संवरार्थं न गृह्णाति तदा वरमिति ॥ ४० ॥

प्रश्नः—दिवसपौषधिकः सन्ध्यासमयप्रतिलेखनां कृत्वा यदि रात्रिपौषधं करोति तदा किं प्रतिलेखनादेशान् पुनरपि मार्गयति उत प्राग् मार्गितैरेव तैः शुध्यति ? ॥ ४१ ॥

उत्तरम्—अत्र प्रतिलेखनादेशाः पुनर्मार्गिता न विलोक्यन्ते ॥ ४१ ॥

प्रश्नः—एकाशनकसहितनिर्विकृतिकप्रत्याख्यानैकाशनकप्रत्याख्यानयोरुच्चारे किमन्तरम् ? ॥ ४२ ॥

उत्तरम्—अत्र निर्विकृतिकैकाशनकप्रत्याख्यानकाशनयोरेतावदेवान्तरमस्ति यन्निर्विकृतिकप्रत्याख्याने "निव्विगइयं पच्चक्खामि" इति उच्चार्यते, एकाशनकप्रत्याख्याने तु "विगइयं पच्चक्खामि" इति। अन्यत् सर्वं सदृशमस्ति। तथैतदप्यन्तरमस्ति यन्निर्विकृतिकप्रत्याख्यानं त्रिविधाहाररूपं भवति, एकाशनकप्रत्याख्यानं तु द्विविधाहाररूपमपीति[1] ॥ ४२ ॥

प्रश्नः—पौषधसामायिकयोर्ग्रहणानन्तरं तयोः पारणकालेऽप्राप्ते ग्राहकशरीरक्लामनायां किं विधेयम् ? ॥ ४३ ॥

उत्तरम्—अत्र पौषधसामायिकयोः पारणकालेऽप्राप्ते यदि ग्राहकस्य शरीरे क्लामना भवति तदा स वेलाप्राप्त्यनन्तरं सावधानतामगते यथाशक्ति तत्पारणाचारं सत्यापयति, यदि ग्राहकः सावधानो न भवति तदा समीपस्था अन्ये वेलायां प्राप्तायां पारणविधिं श्रावयन्ति, यावच्च न श्रावितस्तावन्महतीं विराधनां कर्तुं न ददतीति सम्भाव्यते इति ॥ ४३ ॥

---

१ चतुर्विधाहाररूपमिति. प्र. ।

प्रश्नः—आरात्रिकमङ्गलप्रदीपः सृष्ट्या संहारेण वोत्तार्यते ? तदुत्तारणपाठश्च क इति ॥ ४४ ॥

उत्तरम्—अत्र जिनप्रतिमाऽग्रे आरात्रिकमङ्गलप्रदीपः सृष्ट्योत्तार्यते न तु संहारेण, पूर्वाचार्यप्रणीतग्रन्थमध्ये क्वापि संहारोत्तारणस्याप्यक्षराणि सन्ति परमिदानीं श्राद्धविधिजिनप्रभसूरिकृतपूजाप्रकरणयोः सृष्ट्यैवोत्तारणमुक्तमस्ति तेन तथैव क्रियते। तदुत्तारणगाथा च-मरगयमणिघडियविसालथालमाणिक्कमंडियपईवो। न्हवणयरकरुक्खित्तो भमिओ जिणआरत्तियं तुम्हं ॥ १ ॥ इति ॥ ४४ ॥

प्रश्नः—श्राद्धानां यद्येकादशाङ्गानि श्राव्यन्ते तदा किं प्रथमचतुर्थयोरेव प्रहरयोरुत द्वितीयतृतीययोरपि ? ॥ ४५ ॥

उत्तरम्—अत्र श्राद्धानां एकादशाङ्गानि सूत्रतः श्राव्यन्ते तदा प्रथमचतुर्थप्रहरयोः श्रावितानि शुध्यन्ति। अर्थसहितानि तु द्वितीयतृतीययोरपीति ॥ ४५ ॥

## अथ डुङ्गरपुरसङ्घकृतप्रश्नाः—

प्रश्नः—सप्तदशभेदपूजायां अष्टमङ्गलस्थालभरणे पूजाऽनन्तरं तदपनयने तदन्तर्गतमत्स्ययुगलाकारस्यापि भङ्गे पातकं भवति न वा ? ॥ १ ॥

उत्तरम्—अत्र अष्टमङ्गलमध्ये मत्स्याकारस्य विधानं शास्त्रानुसारितया युक्तमेव वर्तते। पूजाऽनन्तरं तदपनयनमपि युक्त-

१ केवलानीति. प्र.।

मेव प्रतिभासते, तथा यो मन्यते तस्य युक्तिरपि तत्रेदृशी वर्तते, तथाहि—इन्द्रो यदा जिनजन्मोत्सवं कर्तुं समायाति तदा पूर्वं भगवज्जन्मगृहे आगत्य मातुः पार्श्वाद् भगवन्तं गृहीत्वा तत्प्रतिबिम्बं च तत्र मुक्त्वा मेरौ गत्वा जन्माभिषेकं च कृत्वा पुनरपि तत्रागत्य मातुः पार्श्वे भगवन्तं मुक्त्वा प्रतिबिम्बं विसर्जयति। तथा नवीनपित्तलादिप्रतिमायां क्रियमाणायां प्रथमं मदनाकारं विधाय उपरि मृत्तिकां दत्त्वा मदनं मध्यतो गालयित्वा क्षिपति।

अत्र पूर्वत्र च हिंसापरिणामं विना यथा पातकं न भवति तथा मत्स्ययुगलापनयनेऽपि ज्ञेयमिति ॥ १ ॥

प्रश्नः—जिनप्रतिमानां तान्येवाभरणानि प्रतिदिनं परिधाप्यन्ते, अथ तेषां निर्माल्यता कथं न भवति ? ॥ २ ॥

उत्तरम्—एतदाश्रित्य शास्त्रमध्ये एवं कथितमस्ति यद् "भोगविनष्टं द्रव्यं निर्माल्यम्" इति। तेनाभरणानां भोगविनष्टत्वाऽभावेन निर्माल्यता न भवतीति ज्ञेयम् ॥ २ ॥

प्रश्नः—विष्णुकुमारसम्बन्धः कुत्र ग्रन्थे वर्तते ? तथा तेन यल्लक्षयोजनप्रमाणं रूपं कृतं श्रूयते तत् किं उत्सेधाङ्गुलनिष्पन्नेन योजनेन प्रमाणाङ्गुलनिष्पन्नेन वा ? तथा तेन पूर्वपश्चिमसमुद्रयोः पादौ मुक्तौ स्त इत्यप्युक्तमस्ति; तेनैतदाश्रित्य यथा घटमानं भवति तथा प्रसाद्यमिति ॥ ३ ॥

उत्तरम्—अत्र विष्णुकुमारसंबन्ध उत्तराध्ययनवृत्त्युपदेशमालावृत्तिप्रमुखग्रन्थेषु वर्तते। तथा तेन यल्लक्षयोजनप्रमाणं रूपं कृतं वर्तते तदुत्सेधाङ्गुलनिष्पन्नयोजनप्रमाणेन। यत् पुनः पूर्वपश्चिमसमुद्रयोः पादौ मुक्तौ तज्जम्बूद्वीपमध्यस्थलवणसमुद्रखातिकायामिति सम्भाव्यते, अन्यथा, उत्सेधाङ्गुलनिष्पन्नलक्षयोजनप्रमाणशरीरस्य चरणाभ्यां

पूर्वपश्चिमलवणसमुद्रस्पर्शनं दुःशक्यमिति ॥ २ ॥

## सिद्धपुरसङ्घकृतप्रश्नाः—

प्रश्नः—प्रतिवासुदेवे गर्भोत्तीर्णे तन्माता कियतः स्वप्नान् पश्यति ? ॥ १ ॥

उत्तरम्—अत्र त्रीन् स्वप्नान् पश्यतीति ज्ञायते सप्ततिशतस्थानशांतिचरित्राद्यनुसारेणेति ॥ १ ॥

प्रश्नः—तद्दिनतलितपक्वान्नं कटाहविकृतिप्रत्याख्यानवतः कल्पते न वा ? ॥ २ ॥

उत्तरम्—अत्र तद्दिनतलितपक्वान्नं कटाहविकृतिप्रत्याख्यानकरणसमये यदि मुत्कलं रक्षितं भवति तदा कल्पते नान्यथेति परम्परा दृश्यते इति ॥ २ ॥

प्रश्नः—चतुर्मासकमध्ये सार्धद्विगव्यूतप्रमाणनदीमुत्तीर्य आहारग्रहणार्थमिव वन्दनार्थं वा गम्यते न वा ? ॥ ३ ॥

उत्तरम्—अत्र चतुर्मासकमध्ये सार्धद्विगव्यूतप्रमाणनदीमुत्तीर्य भिक्षाग्रहणार्थमिवैकं पादं जले कृत्वा एकं पादं स्थले कृत्वा यदि वन्दनार्थं क्षामणार्थं वा व्रजति तदा शास्त्रानुसारेणैकान्तिको निषेधो नास्ति परमिदानीं प्रवृत्तिर्न दृश्यते इति ॥ ३ ॥

## यताग्रामसत्कसङ्घकृतप्रश्नाः—

प्रश्नः—द्वयोः श्राद्धयोः प्रतिक्रमणकरणसमये अथवा सामायिके कृते एकस्य हस्तादपरेण चरवलके पातिते उभयोर्मध्ये

कस्येर्यापथिकी समायाति ?, किं उभावपि प्रतिक्रामतः एको वा ? ॥ १ ॥

उत्तरम्—अत्र द्वयोः श्राद्धयोः प्रतिक्रमणकरणादौ सावधानतयैकेन चरवलको गृहीतो भवति, अथ यदि द्वितीयहस्तलग्नेन हेतुना पतति तदा तस्येर्यापथिकी समायाति यदि च गृहीतोऽप्यसावधानतयैव तदोभयोरपीर्यापथिकी समायाति ॥ १ ॥

प्रश्नः—यः शुद्धक्रियां कुर्वाणः शुद्धाचारं च पालयन् ईर्यापथिकीमागतां न जानाति स कियद्भिर्मुहूर्तैस्तां प्रतिक्रामतीति ॥२॥

उत्तरम्—क्रियायां क्रियमाणायां सोपयोगतया प्रमार्जनादिविधिनोपवेशनादिषु ईर्यापथिकी नायाति । यतस्तामाश्रित्य कालमानमुक्तं ज्ञातं नास्ति तथापि क्रियान्तरे क्रियमाणे ईर्यापथिकी प्रतिक्रम्यते यतो महत्यां वेलायां मनोवचःकायोपयोगानां सम्यगवबोधो न भवतीति ॥ २ ॥

प्रश्नः—अष्टापदपर्वते भरतचक्रवर्तिकारिताः सिंहनिषद्याप्रमुखप्रासादास्तद्गतबिम्बानि चाऽद्ययावत् कथं स्थितानि सन्ति ? । तथा श्रीशत्रुञ्जयपर्वते भरतकारितान्येव प्रासादबिम्बानि कथं न स्थितानि यतस्तत्राऽसंख्याता उद्धारा जाताः श्रूयन्ते, तेनाष्टापदे यस्य सान्निध्यं शत्रुञ्जये च कस्य न यदेतावान् भेद इति व्यक्त्या प्रसाद्यम् ॥ ३ ॥

उत्तरम्—अत्राऽष्टापदपर्वते भरतचक्रवर्तिकारितप्रासादादीनां स्थानस्य निरपायत्वाद्देवादिसान्निध्यात् " केवइयं पुण कालं

---

१ शुद्धेति, प्र. २ पर्वतेऽपीति. प्र. ।

आययणं अवसिज्झिस्सइ ? तओ तेण अमच्चेण भणियं-जाव इमा उसप्पिणित्ति मे केवलिजिणाण अंतिए सुयं" इत्यादिवसुदेवहिण्डयक्षरसद्भावाच्चाऽद्ययावदवस्थानं युक्तिमदेव । शत्रुञ्जये तु स्थानस्य सापायत्वात्तथाविधदेवादिसान्निध्याभावाच्च भरतकारितप्रासादादीनां अद्ययावदवस्थानाऽभाव इति सम्भाव्यते । तत्त्वं तु तत्त्वविद्वेद्यमिति ॥ ३ ॥

॥ इति श्रीसकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री-श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तर-समुच्चये तच्छिष्यपण्डित-कीर्तिविजयगणिसमुच्चिते चतुर्थः प्रकाशः ॥

समाप्तोऽयं ग्रन्थः

## हीरप्रश्नोत्तरान्तर्गत-ग्रन्थनाम्नां सूची.

